The

# SAMYOGITÂSWAYAMVARAM

by

**Mulshanker Maneklal Yajnik** B. A.

Principal. Rajakeeya Sanskrit Mahavidyalaya

**BARODA.**

With the commentary of Shridhara Shastri

AND

with the free translation

BY

**Laxminath Badarinath Shastri** B. A.



**Printed at 'THE BARODA P. PRESS' for the Publisher.**

1928

**Price Rs 1-4-0.**

अथ

# संयोगितास्वयंवरम् ।

बी. ए. इत्युपाधिधारिणा

याज्ञिककुलोत्पन्नेन माणिक्यलालात्मजेन मूलशङ्करेण

श्रीबडोदा-राजकीय-संस्कृतमहाविद्यालयप्रधानाध्यापकेन

विरचितम् ।

श्रीधरविरचितया सर्वाङ्गविद्योतनीटीकया

शास्त्रीत्युपाह्वबदरीनाथात्मजलक्ष्मीनाथविरचिताङ्ग्लभाषानुवादेन च समेतम् ।

---

तच्च

बडोदा नगरे

'धी बरोडा प्रीन्टींग प्रेस' नाम्नि मुद्रणालये तदध्यक्षेण

प्रकाशकस्य कृते मुद्रापितम् ।

---

( सर्वेऽधिकाराः स्वायत्तीकृताः )

---

शाकः-१८५०. मूल्यं-सपादो रूप्यकः

# OPINION.

SENATE HOUSE,

**Allahabad**, *May 11, 1928.*

DEAR SIR,

I have looked into your drama Samyogitaswayamvara. Permit me to congratulate you on the melodiousness and easy grace of your Sanskrit; and also on the choice of a historical subject

With best wishes,

Yours sincerely,

( Sd. ) **Ganganatha Jha.**

*Vice—Chancellor*, Allahabad University.

# INTRODUCTION.



'The chief end of the Theatre is to disguise, by the insidious sweet, the unpalatable, but salutary bitter of the cup.'

The chief end of poetic composition, as laid down by writers on sanskrit rhetoric, is to lead the society to the highest path of [1]morality and religion, by narrating the heroic and noble deeds of virtuous characters, that have played their part successfully on the stage of the world, in a charming style. Such compositions are either [2]scenic or simply metric. The scenic composition is called the Rupaka, as it is represented on the stage by actors, playing the part of its different characters. The Rupaka is divided into [3]ten classes, of which the [4]drama proper is the most important. There are [5]eighteen minor scenic compositions, which are like the Rupaka in their form, with certain peculiarities in their construction.

---

1. कान्तासम्मिततयोपदेशयुजे । का० प्र०

2. दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् । सा. द. ६

3. नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
   ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ सा० द० ६,

4. नाटकम्

5. उपरूपकाणि —
   नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
   प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
   संलापकं श्रीगदितं शिल्पकं च विलासिका ।
   दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥
   विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ सा० द० ६

The plot of the [1]drama proper is always founded on some well-known historical event. The five [2]stages of its development are the beginning, the effort, the prospect of accomplishing the ultimate object, the certainty of the desired result, and the complete accomplishment of the object; and there are five links,[3] which join these five stages together. There are also five means[4] to accomplish the end, namely, the primary cause of the whole dramatic action, the incident by which the main action is continued, the episode, the minor episode, and the accomplishment of the object which help the gradual development of the plot. The drama must be charming and grand, and must be full of various

1. नाटकं ख्यातवृत्तं स्यात्पञ्चसंधिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूतिनानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ॥
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्या निर्वहणेऽद्भुतः ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥ सा० द० ६.

2. अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥ सा. द ६.

3. अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ।
मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ॥ सा. द. ६

4. बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि॥
फलस्य प्रथमो हेतुर्बीजं तदाभिधीयते ।
अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥
व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।
प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ सा० द० ६.

sentiments, resulting from happy and painful incidents. The whole plot must be arranged in five to ten Acts. The hero must be a righteous king, of some celebrated royal family, and must be patient, noble, valorous and virtuous. He must be either of a divine or semi-divine origin. The heroine[1] must be a maiden or a common woman equally virtuous. The wife of another or an apathetic common woman should never be selected as a heroine, because in that case the erotic sentiment cannot be real, but only fictitious. There the attachment being unjust is mixed with either criminal or cowardly intentions, the vices which are sufficient to constitute a rival hero like Ravana in the Ramayana or Duryodhana in the Mahabharata. The leading sentiment of the drama must be either the erotic or the heroic. Other[2] sentiments, namely the comic, the pathetic, the furious, the terrible, the loathsome, and the marvellous, should help the development of the main sentiment, and there must be the marvellous sentiment in the last[3] connecting link. There should be four or five principal characters, a little inferior to the hero and they must be directly concerned with the main action, which must end in the accomplishment of the final object.

1. अथ नायिका त्रिभेदा स्वाऽन्या साधारणी स्त्रीति ।
नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता ॥
परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥ सा० द० ६.
टीका—अत्र शृङ्गारे परोढाननुरागिवेश्यावर्जनम् ।
तद्विषयरसस्य शृङ्गाराभासत्वादिति भावः ।

2. शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥ सा द० ३

3. निर्वहणसंधौ ।

Thus in the Sanskrit drama there is no scope for the tragedy, in which the conclusion is always calamitous. The brutal midnight murderers, hired assassins, ferocious ruffians, bloody traitors, bewitching sorcerers, and rapacious plunderers and burglers, who are generally introduced in the tragedies of the West to develop the pathetic sentiment, are likely to produce unhealthy impression on the minds of the unscrupulous audience. Such characters are not to be found in Sanskrit love[1]-plays or heroic plays. Even historical incidents which mar the development of the main sentiment or which may degrade the hero or the heroine in public estimation, should be either omitted altogether, or should be related otherwise. Long journeys, massacres and actual fights are never to be exhibited on the stage. The death of the hero should not be even indicated[2] by explicatory dialogues.

Keeping all these points in view, I have composed this love-play, the plot of which is founded upon the striking events of the reign of Pruthvirâja Chauhâna, the last Kshatriya Emperor of India, as depicted by Shriyuta Shripâda Shastri in his series, Bhâratavireratnamâlâ. The tragic end of his life was due to the false[3] notions of religion and politics, prevailing at the time. Had there been a constitutional government of the Vedic period, his fate would have been otherwise. So, I have selected that portion of his life which was marked with noble virtues and which ended in his union with Samyogita.

On reading the series, I was induced to write three plays, two heroic ones, displaying the exploits of Pratàpa and Shivàji, and the third a love-play, describing the love intrigues of Pruthviràja. The heroic play of Pratàpavijaya

---

1. यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ सा० द० ६.

2. विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः । सा० द० ६.

3 Vide my Gujarati work on the ancient Indian polity (आपणं प्राचीन राज्यतन्त्र), pubished by the Baroda government.

was first taken in hand and was finished in 1926, but its publication had to be postponed for want of funds. The present play was undertaken just after, and now I have the good fortune to place it in the hands of the Sanskrit knowing public.

Before concluding, I must repeat the words of Kalidasa, the lord of Indian poets, that, " Until the learned are satisfied, I cannot claim proficiency in the art of dramatic representation." Accordingly, if my work will give satisfaction to the Sanskrit knowing public, I shall feel that my labours are amply rewarded.

NAGARWADA,<br>Nadiad, 1st June, 1928. } **Mulshanker M. Yajnik.**

# अनुक्रमणिका

# सम्राट् पृथ्वीराजः।




आजानुलम्बिदृढमांसलबाहुशाली
संतप्तदीप्तनयनोऽपि मनोऽभिरामः।
एवं स्वमित्रपरिचारकतां गतोऽपि
स्वाभाविकीं न स पुनः प्रभुतां जहाति॥

पृ० ५८

अथ

# संयोगितास्वयंवरम् ।



## प्रथमोऽङ्कः

मेघश्याममुकुन्दसुन्दरमुखे कुन्दावदातस्मिते
स्वच्छन्दं विलसन्ति येऽनवरतं सौदामिनीलीलया ।
भावस्निग्धविलोकनस्नुतरसा वाऽव्यक्तरागाकुला
मुग्धाः पान्तु सुकोमलाधररुचो राधादृशोर्विभ्रमाः ॥ १ ॥

---

ईशानापकृतेऽनङ्ग इति यः ख्यातस्त्रिलोक्या पुन-
र्जातो यस्य सुतत्वमेत्य स नवः सर्वाङ्गसौन्दर्यभाक् ।
श्रीशं विश्वजितं तमिष्टवरदं नत्वा पदे श्रीधरो
व्याख्यां वाक्यविशारदो वितनुते सर्वाङ्गविद्योतनीम् ॥

अथ नाटकादौ 'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ उत्थापनादिकान्यङ्गान्यस्य भूयांसि यद्यपि । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इति विघ्नोपशान्तयेऽवश्यकर्तव्यतयोपपादितां 'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इत्यादिलक्षणलक्षितामाशीरूपां 'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः । नान्दीपदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् ॥' इति श्रीमदभिनवगुप्तपादाचार्यमतानुसारेण चतुरस्रतालानुगतां चतुष्पदां नान्दीं सूत्रधारः पठति—**मेघश्यामेति** । ये सौदामिनीलीलया विद्युल्लीलया कुन्दावदातस्मिते कुन्द इवावदातं प्रसन्नं स्मितं यस्य तस्मिन् मेघश्याममुकुन्दसुन्दरमुखे मेघ इव श्यामो यो मुकुन्दस्तस्य पद-

## नान्द्यन्ते

**सूत्रधारः**—आर्ये अलमेतावता परिश्रमेण ! इत एवागम्यताम् ।

( प्रविश्य )

**नटी**—आर्यपुत्र इयमस्मि । आज्ञापयत्वन्यदनुष्ठेयम् ।

---

सुन्दरं मुखं तस्मिन् अनवरतं सततं स्वच्छन्दं यथेच्छं विहरन्ति ते, भावस्निग्धवि-लोकनस्तु नरस भावेन मनोऽनुरागेण स्निग्धं प्रेमाकुलं यद्विलोकनमीक्षणं तेन स्तुत ईषदाविर्भूतो रसः प्रणयो येषां ते मुग्धा अकृत्रिमा अत एवाव्यक्तो यो रागः प्रीति-स्तेनाकुला व्याप्ताः सुकोमलाधररुचः सुकोमलो याऽधरस्तस्य रुगेव रुग्येषां ते राधादृशोर्विभ्रमा विलासा वो युष्मान् पान्तु रक्षन्तु । अथ ‘ श्लोकः काव्यार्थ-सूचकः ’ इत्युक्तत्वादस्य तत्सूचकत्वं निरूप्यते । मुकुन्दः मुकुं मुक्तिं ददाति यच्छतीति पित्रा कारागृहे निरुद्धायाः संयोगितायाः मुक्तिप्रदः पृथ्वीराजः सूचितः । राध्नोति साधयत्यभीष्टमिति च राधा संयोगिता । मेघशब्देन तन्नाम्या जलधरच्छद्मना नायकस्य कनोजनगरे निवासः । श्यामपदेन ‘ श्यामवर्णोऽयं विष्णुदैवतः ’ इत्यु-पवर्णितस्य शृङ्गाररसस्यात्राङ्गित्वं ‘ एक एव भवेदङ्गी शृङ्गारो वीर एव वा ’ इत्युक्तत्वात् । कुन्दारविन्दानस्मित इत्यनेन कुन्दपुष्पस्य वसन्त एव प्रादुर्भावाद्वसन्त-समयः । राधादृशो विभ्रमा इत्यनेन नायिकानुवर्ती सखीजनः । मुग्धा इत्यनेन नायिकायास्तत्सखीजनस्य च मुग्धत्वम् । स्वच्छन्दं विलसन्तीति सखीजनस्य सौदा-मिनीलीलया स्वच्छन्दविहारं नायिकाया अभीष्टसंपादनार्थं च दूरान्तिकसंचारः । भावस्निग्धमिति च नायिकाया हंसमिथुनादिषु विलोकनं तेनेषदभिव्यक्तो नायिकानु-रागः । अव्यक्तरागाकुला सुकोमलाधररुच इत्यनेन च नायिकायाः सौन्दर्यं त-त्सखीजनस्य च कामकलाकौशल्यं सूचितम् । अत्र राधामुकुन्दविषयस्य कविगत-रत्याख्यभावस्य राधामुकुन्दयोः परस्परविषयरत्याख्यस्थायिभावकः संभोगशृङ्गारे-ऽङ्गम् । अतो रसवदलङ्कारः । तदुक्तं दर्पणे-‘ रसभावौ तदाभासौ भावस्य प्रशम-स्तथा । गुणीभूतत्वमायान्ति यदाऽलंकृतयस्तदा । रसवत्प्रेय ऊर्जस्वि समाहित-मिति क्रमात् । ’ इति । शार्दूलविक्रीडितं चात्र वृत्तम् ।

**नान्द्यन्त इति** । अत्र पत्रावलीसंज्ञा नान्दी ‘ यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा ’ इत्युक्तेः । सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः । तल्लक्षणं ‘ वर्तनीयतया सूत्रं प्रथमं येन

**सूत्रधारः**—अद्य खलु नटपुरवास्तव्यमूलशङ्करविरचितेन संयोगितास्वयंवराख्येन नवेन नाटकेनैषा विद्वत्परिषत्समाजनीया। तत्प्रस्तूयतां तावद्वसन्तरागेण स्वरतालबद्धा कापि रमणीया गीतिः परिषच्चेतःप्रसादनाय। संप्रति खलु,

---

सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ' इति। **संयोगितास्वयंवरेणेति**। संयोगितायाः स्वयंवरो यस्मिंस्तत् संयोगितास्वयंवरं नाटकम्। ' अधिकृत्यकृतेग्रन्थे ' इत्याणि ' आख्यायिकाभ्यो बहुलम् ' इति वार्तिकेन लुकि। अभेदोपचाराद्वा। **नाटकेनेति**। तल्लक्षणमुक्तं दर्पणे-' दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्। दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम्॥ नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः। ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥ नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्। पञ्चाधिका दशपरास्तत्राङ्काः परिकीर्तिताः॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्। दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः। एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः॥' इति। अत्र धीरोदात्तो नायकः। तल्लक्षणं ' अविकत्थनः क्षमावानतिगम्भीरो महासत्वः। स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥ ' इति। नायिका च पित्रायत्तान्या। ' कन्या त्वजातोपयमा सलज्जा नवयौवना ' इत्युक्तेः। शृङ्गारश्चाङ्गी वीरादयोऽङ्गभूता रसाः। अत्र पञ्चसन्धयस्तदङ्गानि च यथास्थानमुपपादयिष्यन्ते। **वसन्तरागेणेति**। भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा। श्रीरागो मेघरागश्च रागाः षडिति कीर्तिताः॥' इति षडेव प्रधानरागाः। तत्र श्रीरागस्याङ्गभूतो वसन्तरागः सर्वदा वसन्ते गीयते। तदुक्तं लक्ष्यसंगीते-' पूर्वीमेलसुसंजातो वसन्ताख्यो बुधैर्मतः सम्पूर्णस्तारषड्जांशो वसन्तर्तौ सुखप्रदः॥ ' इति। अस्य च शृङ्गारोद्दीपनत्वं प्रसिद्धम्। **स्वरतालबद्धेति**। स्वयं राजन्त इति स्वराः। ते च ' निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः॥ ' इति। एते पुनः ' स रि ग म प ध नि ' इति प्रसिद्धाः। तल्लक्षणं रत्नाकरे-' श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते॥ ' इति। तालयति प्रतिष्ठापयति गीतामिति तालो लघ्वादिक्रियया

मलयजकणानुवासितहिमकरकरशीतलो मृदुसमीरः ।
उपगुह्य नवकिसलयां नर्तयति नतां लतावनिताम् ॥२॥

नटी—यदाज्ञापयत्यार्यपुत्रः ।

( इति गायति )

( वसन्तरागेण त्रितालेन गीयते । )

विलसति ललिता । उपवनवनिता ॥
नवपल्लविता अनिलतरलिता
तरुवरमिलिता सुकुमारलता—विलसति० ॥ १ ॥

रसिकामहिते मृदुकेलिहिते
मनसिजदयिते सरसवसन्ते—विलसति० ॥ २ ॥

**सूत्रधारः**—(वाद्यध्वनिमाकर्ण्य) आर्ये धन्यासि ; त्वया गीतस्य रागस्यैव स्वराणामनुरणनं सर्वत्र प्रवृत्तमिव दृश्यते ।

---

**धंमितो** गीतादेर्मानं विदधत्काल एव तालः । स च द्विविधश्चतुरस्रस्त्र्यस्रश्चेति । **स्वरैस्त**त्तद्रागनियतस्वरैस्तालेन च बद्धा परिरक्षितेत्यर्थः ।

‘ ऋतुं च कंचित्प्रायेण ’ इत्युक्तत्वाद्वसन्तसमयमधिकृत्य गायति—**मलयजेति** । अत्र यथा मृदुसमीरो लतां नर्तयति तथाऽनङ्गो नायिका नर्तयतीति वनितापदेन समीरादेन च व्यज्यते । लतावनितामिति रूपकालङ्कारः । मलयजकणानुवासितत्यनेन दक्षिणानिलः, हिमकरकरशीतलत्यनेन निशासमयः, मृदुसमीरेत्यनेन वसन्तागमश्च द्योत्यते ।

**विलसति ललितेति** । ललिता उपवनं वनिता उपवनवनिता सुकुमारलता विलसतीति लतावर्णनम् । रसिकाभिर्महिते बहुमते रसिकामहिते । अत्र वनितादेन नायिकावृत्तान्तो मृदुकेलिादेन च वसन्तोत्सवो द्योत्यते । अत्रान्त्यानुप्रासः शब्दलङ्कारः ।

**नटी**—(सस्मितम्) आर्यपुत्र अद्य खल्वस्मन्महाराजेन प्रस्तूयमाने राजसूये समागतानां राजकुलानां विनोदार्थं वीणावादिनोऽपि वसन्त-रागेणैव गायन्ति। यस्यैष ध्वनिः।

**सूत्रधारः**—आं साधु स्मारितम्। अद्यैवैतस्य महाक्रतोरारम्भ इति विस्मृतं खलु मया। आर्ये पश्यैषोऽस्मन्महाराजो जयचन्द इदानीं

प्रेम्णामन्त्रितमुत्सवप्रमुदितं सत्कृत्य सम्राडयं
कान्तं राजकुलं नितान्तकृतिनं मत्वा स्वकीयान्वयम्।
अन्तर्वेश्मनि दीक्षितः क्रतुविधावानन्दितो वीणिभि-
र्मन्त्रं मन्त्रयते कमप्यभिनवं मन्त्रिद्वितीयः पुनः ॥३॥

(इति निष्क्रान्तौ)

इति प्रस्तावना।

---

**राजसूय इति**। राजसूयः श्रौतयज्ञविशेषः। तदुक्तं शतपथे 'राजा वै राजसूयेनेष्ट्वा भवति।' इति। स एव सम्राडित्यभिधीयते-'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राड्' इत्युक्तत्वात्।

**प्रस्तावनेति**—अत्रावलगिताख्या प्रस्तावना। तदुक्तं दर्पणे—'यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥' इति। नटीगीतरागस्वराणामनुरणनसादृश्योद्भावनेन वीणिभिरानन्दितस्य जयचन्द्रस्य प्रवेशप्रसाधनादिति।



( ततः प्रविशति मन्त्रिद्वितीयः कनोजाधिपो जयचन्द्रः )

**जयचन्द्रः**—मन्त्रिन् अद्य खल्वियं राजसूययज्ञार्थं समागतैर्महर्षिसंघैर्महीपालकुलैश्चाकुलाऽस्मन्नगर्यमरावतीव संवृत्ता ।

**सुमतिः**—महाराज राजसूयदीक्षितस्त्वमपि
नानादिगन्तसमुपेतनृपोत्तमाङ्ग-
राजन्महार्हमुकुटार्चितपादपीठः ।
विन्ध्याद्रिसानुरुचिराङ्घ्रियुगाग्रिमर्षे-
र्लीलामिहावहसि देव घटोद्भवस्य ॥ ४ ॥

**जयचन्द्रः**—अप्युपक्लृप्ता यज्ञसंभाराः ।

**सुमतिः**—अथ किम् । परं च नाद्याप्युपलब्धा काचित् पृथ्वीराजस्य प्रवृत्तिः ।

**जयचन्द्रः**—(सरोषम्) अन्यायसंपादितदिल्लीशपदेन दर्पान्ध एष दुरात्मा तु शासनार्ह एव ।

**सुमतिः**—महाराज दण्डस्त्वगतिका गतिः । तत्पुनरपि पत्रिकया सोऽनुनेयः ।

**जयचन्द्रः**(सरोषम्) लिखतु तावच्छासनपत्रम् ।
सकलभारतराजकुलेश्वरो
दिशति ते स्वमखे प्रतिहारिताम् ।

---

**नानादिगन्तेति** । नाना दिगन्तेभ्यः समुपेतानां नृपाणामुत्तमानि यान्यङ्गानि शीर्षाणि तेषु राजन्तो ये महार्हा रत्नखचितत्वान्महामूल्या मुकुटास्तैरर्चितं पूजितं पादपीठं यस्य सः । विन्ध्याद्रेः सानुभिः रुचिरमङ्घ्रियुगं पादयुग्मं यस्य तस्याग्रिमर्षेर्महर्षेर्घटोद्भवस्यागस्त्यस्य लीलां शोभामावहसि बिभर्षीत्यर्थः । अत्रान्यस्य शोभामन्यो बिभर्तीति निदर्शनाऽलङ्कारः । 'असवन्वस्तुसंबन्ध उपमापरिकल्पकः' इत्युक्तत्वात् ।

**सकलभारतेती** । अत्र प्रतिहारितामिति तर्जनमनुभावोऽरिः पृथ्वीराज

यदि नियोगमिमं न हि पद्यसे
समरयज्ञपशुत्वमुपेष्यसि ॥ ५ ॥ इति ।

**सुमतिः**–(विलिख्य) लिखितमेव तद्यथा निर्दिष्टं देवेन। कः कोऽत्र भोः।

(प्रविश्य)

**प्रतिहारी**–आज्ञापयत्वार्यः ।

**सुमतिः**–शीघ्रमेव प्रेषयैषा पत्रिका दूतद्वारा पृथ्वीराजाय।

**प्रतिहारी**–यदार्य आज्ञापयति।

(इति निष्क्रान्तः)

**जयचन्द्रः**–अरे मेवाडराजेन समरसिंहेनापि नादृतमस्मन्निमन्त्रणम् ।

**सुमतिः**–महाराज समरसिंहस्तु पृथ्वीराजस्य परमसुहृद् । अतः सोऽपि नूनं तद्वर्त्मगामी भविता ।

**जयचन्द्रः**–(सरोष स्वगतम्) साधु समरसिंह साधु ! (प्रकाशम्) अस्माभिर्विततस्य राजसूयक्रतोर्विघातायैवैतावुद्यतौ। किं त्वेनादृशैः क्षुद्रजननिश्चेष्टितैर्न मन्दोत्साहो भविष्यति कनोजाधिपः ।

**सुमतिः**–(विचार्य) महाराज विजिताशेषनरपतिकुलस्यैव राजसूयविधानं श्रूयते। तदेतयोरुपस्थितिमन्तरा कथं प्रवर्तिष्यन्ते यज्ञकार्याणि।

**जयचन्द्रः**–नात्र विहिताविहितशङ्कावसरः। तत्स्थानापन्ने भविष्यतस्तयोर्हिरण्यनिर्मिते प्रतिकृती ।

---

आलम्बनं जयचन्द्रगतक्रोधः स्थायिभाव आमन्त्रणास्वीकार उद्दीपनं जयचन्द्रगतगर्वश्च व्यभिचारिभावः। एवमत्र रौद्रो रसोऽस्य च संयोगितायाः पूर्वरागाख्यविप्रलम्भपोषकत्वान्नाटकेऽङ्गत्वम् । द्रुतविलम्बितं च वृत्तम् । सकलभारतराजकुलेश्वर इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

(प्रविश्य)

**प्रतिहारी**—जयतु जयतु देवः। एष पृथ्वीराजानुचरः पत्रिकामादाय संप्राप्तः।

**जयचन्दः**—सत्वरमिहानय तत्पत्रिकाम्।

**प्रतिहारी**—यदाज्ञापयति देवः।

(इति निष्क्रान्तः)

**जयचन्दः**—(स्वगतम्) पत्रिका प्रेषिता स्वयं तु नायातः। (प्रकाशम्) सर्वथा प्रतिकूल एवासाविति तर्कयामि।

(प्रविश्य)

**प्रतिहारी**—देव एषा पृथ्वीराजमुद्राङ्किता पत्रिका।

(इत्यर्पयति)

**जयचन्दः**—(पत्रिकां गृहीत्वा) पुरोहितं द्रष्टुमिच्छामि।

**प्रतिहारी**—यद्देव आज्ञापयति।

(इति निष्क्रान्तः)

**जयचन्दः**—मन्त्रिन् एनामुद्घाट्य वाचय।

(प्रविश्य)

**श्रीकण्ठपुरोहितः**—समृध्यतां विजयश्रिया महाराजः।

(इत्युपविशति)

**सुमतिः**—(वाचयति)

अरे कनोजाधिप आर्यधर्मध्वंसपटुना त्वया किमिदमारब्धम्। ननु

दुर्दैवतस्त्वमसि मूढमते प्रवृत्तः
सम्राज एव विहिते नृप राजसूये।

---

**दुर्दैवत इति**। अत्र पृथ्वीराजस्य युद्धोत्साहः स्थायिभावोऽरिर्जयचन्द्र आलम्बनं तस्य च राजसूयप्रवृत्तिरुद्दीपनं गर्वः संचारिभावः। एवमत्र युद्धवीरो रसः।

सद्यो विरंस्यसि न चेद्व्यवसायतोऽस्मा-
द्रन्ताशु मे शलभतां करवालवह्नौ ॥ ६ ॥

**जयचन्दः**—( आकर्ण्य सरोषम् ) हा मूढ किमेवं प्रगल्भसे । कोऽन्यो हतजीवितः सम्राट्पदभाग्भवितुमर्हति भारतेवर्षे । ( विचिन्त्य ) आं ज्ञातम् । असौ नराधमस्त्वात्मानमेव सम्राट्पदेन व्यपदिशति । मन्त्रिन् असह्यो ह्येषोऽधिक्षेपः ।

**श्रीकण्ठपुरोहितः**—प्रसीदतु महाराजः । दीक्षितस्य ते नास्ति कोपावसरः ।

**जयचन्दः**—भगवन् नाहमकारणकोपाकुलः ।

**श्रीकण्ठपुरोहितः**—तथापि
सकलनृपमतस्त्वमेव सम्राड् विजयरमाञ्चित नाममात्रतोऽन्यः ।
क्व खलु भुवनभासनः पतङ्गः क्व च तनुदीपशिखालयः पतङ्गः ॥ ७ ॥

**जयचन्दः**—अरे राहुरिव स तु मां ग्रसितुमुद्यतः । अत उन्मूलयितव्य एव । कः कोऽत्र भोः ।

(प्रविश्य)

**प्रतिहारी**—आज्ञापयतु देवः ।

**जयचन्दः**—सभागृहमार्गमादेशय ।

अस्य च विप्रलम्भपोषकत्वान्नाटकेऽङ्गत्वम् । वसन्ततिलकावृत्तम् । करवाले वह्नित्वारोपस्य राज्ञि शलभत्वारोपे निमित्तत्वादत्र परम्परितरूपकमलङ्कारः ।

**सकलनृपेति** । हे विजयस्य रमया श्रियाऽञ्चित पूजित त्वमेव सकलनृपमतः सम्राडसि । भुवनस्य भासनः प्रकाशकः सूर्यः क्व । तन्वी चासौ दीपस्य शिखा तस्यां लीयते नश्यति तादृशः पतङ्गः कीटविशेषः क्व । पुष्पिताग्रावृत्तम् । विरूपयोः सूर्यशलभयोः पतङ्गत्वेन संघटनादत्र विषमालङ्कारः ।

**प्रतिहारी**—इत इतो देवः।

(सर्वे परिक्रामन्ति)

एतत्सभागृहद्वारं प्रविशतु देवः सानुगः।

(इति निष्क्रान्तः)

(प्रविश्य)

**जयचन्दः**—(सिंहासनमारुह्य) स्वागतं सामन्तवरेभ्यः।

**सामन्ताः**—(उत्थाय) विजयतां सम्राट्।

(इत्युपविशन्ति)

**जयचन्दः**—(साटोपम्) सामन्तवर्याः दर्पान्धो दिल्लीश्वर आत्मानं सम्राजं मन्यमानो नात्रोपसर्पति। स क्षुद्रः कथमपि वशमापादनीयः।

**हमीरः**—साम्राज्यैश्वर्यशालिनि महाराजे कोऽन्यो विनाशोन्मुखः सम्राट्पदमभिलषेत्। यतः

रिपुदलविपिने दवाग्निरूपं
प्रसृतमहो तव कोशदण्डतेजः।
दृढतरमपि वीरपादपं तत्
किमिति करोति न भस्मसात् क्षणेन॥८॥

**कहरकण्ठीरः**—महाराज प्रयाणाभिमुखं तव सैन्यं विज्ञायैवान्वेषिष्यतेऽसौ ते चरणरजःशरणम्। यतः

प्रलयचपलमेघवत्तवेदं
नृपकण्ठीरव गर्जितं निशम्य।

---

**रिपुदलेति**। रिपूणां दलं सैन्यमेव विपिनं वनं तस्मिन्दवाग्निरूपं प्रसृतं तव कोशोऽर्थसंपत्तिर्दण्डश्च सेनासंपत्तिस्तयोस्तेजो ज्वलनः प्रतापो दृढतरं दृढमूलमपि वीर एवपादपस्तं किमिति क्षणेन भस्मसान्नकरोति। करोत्येवेति फलितोऽर्थः। पुष्पिताग्रावृत्तम्। परम्परितरूपकं चालङ्कारः।

**प्रलयचपलेति**। नृपः कण्ठीरवः सिंह इव तत्संबुद्धौ हे नृपकण्ठीरव

नवमदकलुषितकपोलभित्तिः
किमु न जहाति धृतिं मतङ्गजोऽयम् ॥ ९ ॥

**सुमतिः**—तथापि यावद्राजनीतिकोविदः कयमाषस्तस्य मन्त्रिपदमलङ्करोति तावन्न भविताऽसावन्तिमोपायसाध्यः । तत्साम्ना दानेन वैष वशीकर्तव्यः ।

**जयचन्द्रः**—मन्त्रिन् चरमोपायसाध्य एवासौ परिपन्थी । तद्
दुर्दान्तदर्पशमनक्षम एव सद्यः
शूरो ममैतु पुरतः समरप्रवीरः ।
अस्मद्विकत्थनपरं मनुजाधमं यो
जीवन्तमेव निहतं तमु वा नियच्छेत् ॥ १० ॥

**सामन्ताः**—सर्वेऽपि वयं रिपून्मूलने बद्धपरिकराः ।

**वाङ्कुरायः**—(साटोपम्) महाराज अलमहमेकाकी दिल्लीशपददृप्तस्य तस्य दर्पविघाताय । अद्यैवाहं
कामक्रोधातिरेकव्यसनविदलितं दुर्विनीतं मदान्धं
त्वत्कोपाग्निप्रदग्धं परिणतविभवं चायुषोऽन्तं गतं तम् ।
हत्वा निःशेषतस्तद्बलमतिविपुलं तर्पयित्वा कृपाणं
जीवग्राहं गृहीत्वा निगडितचरणं तेऽन्तिकं
प्रापयामि ॥ ११ ॥

---

**प्रलये** चपला ये मेघास्तद्वत्तेवेदं गर्जितं निशम्य नवमदेन कलुषिते कपोलाववभित्ती यस्य सोऽयं मतङ्गजोऽपि पृथ्वीराजः किमु धृतिं न जहाति । अपि तु जहात्येवेत्यर्थः । पुष्पिताग्रावृत्तम् । परंपरितरूपकं चालङ्कारः ।

**दुर्दान्तेति** । दुर्दान्तस्य दुर्विनीतस्य दर्पस्य शमने क्षमः समरे युद्धे प्रवीरः शूरः सद्य एव मम पुरत एत्वागच्छतु । योऽस्माकं विकत्थनं निन्दा परं प्रधानं यस्य तं मनुजाधमं पृथ्वीराजं जीवन्तमेव वा निहतं वा नियच्छेद्बन्दीकुर्यात् । अत्र वसन्ततिलकावृत्तम् ।

**कामक्रोधेति** । जीवग्राहं गृहीत्वा जीवन्तं गृहीत्वेत्यर्थः । ‘ समूलाकृतजी-

**जयचन्दः**—धन्योऽसि मे प्रधानवीर ।

**सामन्ताः**—प्रथितप्रभावान्वयानुरूपमेवेदं ते वीरचेष्टितम् ।

**जयचन्दः**—वीरभ्रातः प्रियसामन्ताः युष्मद्राजभक्तिपरिपोषितस्याद्यापि प्रचलति मे निष्कण्टकं राज्यशासनम् ।

**सामन्ताः**—महाराजेनानुग्रहपरंपरया वशीकृतमस्मच्चेतो विषयान्तरविमुखं राजशासनमात्रं प्रतीक्षते ।

**जयचन्दः**—तद्गच्छतां खुर्शानखानबन्दातमीरसामन्तौ ममवीरानुजस्य साहाय्यार्थम् ।

**सामन्तौ**—यथाज्ञापयति देवः ।

(इति निष्क्रान्तौ)

**जयचन्दः**—सेनापते एतस्य प्रधानवीरस्य साहाय्यार्थं संनह्यतां दशसहस्रभटधुरीणं महत्सैन्यम् । तथैव च

प्रतिष्ठतां मे चतुरङ्गिणी चमूः
शस्त्रास्त्रयन्त्रैः परिबृंहिता द्रुतम् ।
प्रधृष्य धृष्टं नरपालपांसनं
करोतु सा तस्य बलात्प्रमर्दनम् ॥ १२ ॥

**सेनापतिः**—महाराज राजसूयसंमिलितराजकुलानि युद्धकलाकौशल्यं प्रदर्शयितुं सज्जीकृतां सेनामद्यैव प्रस्थापयामि

(इति निष्क्रान्तः)

**जयचन्दः**—भ्रातः त्वमपि तावद्विजयप्रस्थानाभिमुखो भव ।

**वालुकरायः**—यथाज्ञापयति महाराजः ।

(इति निष्क्रान्तः)

---

वेषु हन्कृञ्ग्रहः ' इत्यनेन णमुल् । अत्रोत्साहः स्थायिभावो निजभर्तृपरिपन्थ्यालम्बनं संग्राम उद्दीपनं तर्जनं चानुभाव आक्षेपो गर्वश्च संचारिणौ । एवमत्र युद्धवीरो रसः । वंशस्थवृत्तम् ।

**जयचन्दः**—मन्त्रिन् सुव्यवस्थितमेतत्कार्यम्। तदेहि मन्त्रगृहमुपेवः। कः कोऽत्र भोः।

(प्रविश्य)

**प्रतिहारी**—आज्ञापयतु देवः।

**जयचन्दः**—मन्त्रगृहमार्गमादेशय।

**प्रतिहारी**—इत इतो देवः।

(सर्वे परिक्रामन्ति)

एतन्मन्त्रगृहद्वारं तत्प्रविशतां देव आर्यश्च।

(इति निष्क्रान्तः)

(प्रविश्योपविश्य च)

**जयचन्दः**—मन्त्रिन्, अस्ति राजसूयानुषङ्गिकः स्वयंवरोऽपि पुनर्ममौत्सुक्यकारणम्।

**सुमतिः**—(स्वगतम्) कथमेवं ब्रवीति महाराजः। (प्रकाशम्) समागतेषु राजकुलेषु त्वनायाससाध्योऽयमुपक्रमः। नात्र चिन्तालवस्याप्यस्त्यवसरः।

**जयचन्दः**—(सनिःश्वासम्) परं च श्रुतं मया देवीमुखेन यदुत्सवनिमित्तेऽपि निरुत्सवा मे प्रियपुत्री संयोगिता।

पृष्टा सती वदति सा सुविचार्य वाचं
नास्वादयत्यपि नृपेन्द्रकुलार्हभोगान्।
आसेवते मुहुरसौ विनता विविक्तं
नावेदयत्यथ मनोगतमाधिहेतुम्॥ १३॥

---

**स्वयंवरोऽपीति**। अत्र मुखसन्ध्यारम्भः। 'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा। प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम्॥' इत्युक्तत्वात्।

**देवीमुखेनेति**। अत्र देवी संयोगितायाः सापत्नमाता। यदुत्सवेति। अत्रोपक्षेपात्मकं संध्यङ्गम्। 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः' इत्युक्तेः।

**पृष्टा सतीति**। अत्र प्रथमावतीर्णमदनविकारा मुग्धा नायिका। तदुक्तं

**सुमतिः**—नियोज्या कापि निपुणा समवयस्का वयस्याऽस्या मनोभावावगमाय । यतः

विस्रम्भपात्राय मनःप्रवृत्ते
रहस्यमाख्याति नवानुरागा ।
अत्यन्तगोप्यां रुजमातुरा किं
चिकित्सकेभ्योऽपि हि संवृणीत ॥ १४ ॥

**जयचन्द्रः**—कार्यनिर्वाहकुशला देवी यथोदितं विधास्यति । परं चास्याश्चित्तप्रसादस्तावत् प्रथममापादनीयः ।

**सुमतिः**—महाराज संनिहितः खलु वसन्तसमयः । संप्रति हि

विमलजलसरःस्रवावगाह-
प्रवणनिजोपवनाश्रितो जनौघः ।
विहरति नवकेलिभिर्वसन्ते
समहिमतापविनन्दितान्तरङ्गः ॥ १५ ॥

---

दर्पणे—'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥' इति । परिकराख्यं च संध्यङ्गम् । 'समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः' इति । वसन्ततिलकावृत्तम् । अत्र च चिन्ताख्या कामदशोपवर्णिता । तद्यथा दर्पणे—'द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् । श्वासैर्मनोरथैश्चापि चेष्टाः स्मृतिरुच्यते' इति । तत्रैव दश कामदशाः—'अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च । उन्मादोऽथ व्याधिर्जडतामृतिरिति दशात्र कामदशाः ॥' इति ।

**विस्रम्भेति** । नवोऽनुरागः प्रणयो यस्याः सा विस्रम्भपात्राय विश्वसनीयाय जनाय मनःप्रवृत्ते रहस्यमाख्याति । हि यस्मादत्यन्तगोप्यामपि रुजमातुरा व्याधिता चिकित्सकेभ्योऽपि किं संवृणीत । नैव संवृणीतेत्यर्थः । अत्रार्थान्तरन्यासोऽलङ्कारः । उपजातिवृत्तम् ।

**विमलजलेति** । वसन्ते विमलं जलं येषां ते, सरांसि च स्रवाः प्रवाहाश्च तेष्ववगाहे प्रवणश्चासौ निजोपवनाश्रितश्च जनौघो जनसमुदायः, समौ हिमं

तथाच

नवप्रसूनैर्मधुमालतीलता
मनांसि यूनां परिमोदयन्ति ।
स्वभावतिक्ताऽपि च निम्बमञ्जरी
सुगन्धिनं गन्धवहं करोति ॥ १६ ॥

तत्प्रस्तूयतां वसन्तोत्सवो राजकन्याचेतोविकृत्यपाकरणाय ।

**जयचन्दः**—एवमेव । कः कोऽत्र भोः ।

(प्रविश्य)

**प्रतिहारी**—आज्ञापयतु भर्ता

**जयचन्दः**—उच्यतां मद्वचनादन्तःपुराधिकृतो यत् संप्रवृत्ते वसन्तेऽस्मदुपवने वितन्यतां वसन्तोत्सवः समानवयोभिरेव सखीभिः । तत्र च वृक्षान्तरिता देवी कलयतु संयोगिताया मनोगतमिति ।

**प्रतिहारी**—तथा

(इति निष्क्रान्तः)

---

तापश्च हिमतापौ ताभ्यां नन्दितं प्रसादितमन्तरङ्गं मनो यस्य तादृशः सन् नवकेलिभिर्वसन्तसमयानुकूलक्रीडाभिर्विहरतीत्यर्थः । अस्य शृङ्गाररसोद्दीपनत्वात् प्रधानरसपोषकत्वम् । स्वभावोक्तिरलङ्कारः । पुष्पिताग्रावृत्तम् ।

**नवप्रसूनैरिति** । मध्व्यो मधुराश्च ता मालतीलताश्च नवप्रसूनैर्नवकुसुमैर्यूनां मनांसि परिमोदयन्ति समाह्लादयन्ति च स्वभावेन तिक्ता तिक्तगन्धाऽपि निम्बमञ्जरी गन्धवहं पवनं सुगन्धिनं मधुरं करोति । यथा वसन्तप्रभावेण प्रकृतितिक्ताऽपि निम्बमञ्जरी पवनं मधुरं करोति तथा संयोगिताऽपि परिजनं नन्दयिष्यतीति भावः । अत्र विषमाऽलङ्कारः । उपजातिवृत्तम् ।

**वसन्तोत्सव इति** । वसन्तर्तुमधिकृत्य माघशुक्लपञ्चम्यां वितन्यमान उत्सवो वसन्तोत्सवः । ‘तत्र रतिकामयोः पूजनमुक्तम्’ इति धर्मसिन्धौ ।

**जयचन्दः**—आवामपि तावद्धर्मासनमुपसृत्य राजकार्याणि पश्यावः।

(इति निष्क्रान्तौ)

समाप्तोऽयं राजसूयोपक्रमनामा प्रथमोऽङ्कः।

---

**प्रथमोऽङ्क इति**। अङ्कलक्षणं दर्पणे-'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः। भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः॥ विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः। युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्। आवश्यकानां कार्याणामविरोधाद्विनिर्मितः॥ ............ देवीपरिजनादीनाममात्यवणिजामपि। प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः॥ अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः॥' इति। तथा च नाट्यशास्त्रे-'अङ्क इति रूढिशब्दो भावैश्चरसैश्च रोहयत्यर्थान्। नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः॥' इति।

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्योतन्यां राजसूयोपक्रमनामा प्रथमोऽङ्कः समाप्तः।



अथ

# द्वितीयोऽङ्कः ।

(ततः प्रविशति सह सख्या संयोगिता)

**चातुरिका**—सखि तव विनोदार्थं तातपादैरुपक्रान्तोऽपूर्वो वसन्तमहोत्सवः ।

**संयोगिता**—एष तु प्रतिवसन्तं पुनरावर्तते । तत्कथमपूर्व इत्यभिधीयते ।

**चातुरिका**—अस्ति कश्चिदत्र विशेषः ।

**संयोगिता**—किमम्बा स्वयमेव वसन्तपूजार्थमुपेष्यति ।

**चातुरिका**—नैव

**संयोगिता**—कथय तर्हि को विशेषस्तत्र ।

**चातुरिका**—सवयोभिरेव सखीभिराराध्यो भगवान् कुसुमायुध इति तातादेशः ।

**संयोगिता**—अभीष्टमेव तदस्माकम् । तेन च भविष्यति यथेष्टकेलिनिरतः सखीजनः ।

**प्रथमाङ्कान्ते**—‘ सुमतिः—तत्प्रस्तूयतां वसन्तोत्सवः । जयचन्दः—अस्मदुपवने विरच्यतां वसन्तोत्सवः । ’ — इति पात्रद्वयेन सूचितस्य द्वितीयाङ्कस्य पूर्वाङ्काविभागत इवावतीर्णत्वादङ्कावतारोऽत्र योऽक्षेपकः । तदुक्तं दर्पणे—‘ अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥ ’ इति । अस्मिन्नङ्के प्रधानरसस्योद्दीपनविभावानां वसन्तवर्णजलकेलिवनविहारसंगीतभूषादीनां वर्णनम् । तदुक्तं दर्पणे — ‘ तत्र ऋतुषट्कं चन्द्रादित्यौ तथोदयास्तमयौ । जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृति । अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च ’ ॥ इति ।

**चातुरिका**—अथ किम्। ( कर्णं दत्वा ) अयि श्रूयते संमिलितानां सखीनां मिथः प्रलापः। तदावामपि तत्र गच्छावः।

( इति परिक्रामतः )

**संयोगिता**—अतीव रमणीयः खलूद्यानप्रदेशः।

**चातुरिका**—सखि पश्यात्र वसन्तसमुपागमापादितामुपवनसुषमाम्।

ईषत्स्फुटैः कोमलपल्लवाग्रैरव्यक्तरागैर्ललितैश्च कुड्मलैः।
मनोऽभिरामैर्वरवल्लिविभ्रमैर्गता वनश्रीर्नवयौवनत्वम् ॥१॥

तथा च

नवकिसलयरागारञ्जितोऽयं रसालो
हरति मदकलानां कोकिलानां मनांसि।
बकुलमलिकुलानां गुञ्जितेनाकुलं तत्
मृदुलसुरभिगन्धिं गन्धवाहं करोति ॥२॥

**संयोगिता**—अहो नितान्तं नयनसुभगोऽयमुपवनाभोगः।

**चातुरिका**—एष आवां प्रतीक्षमाणो दन्तमिहासमुत्सुकस्तिष्ठति सखीजनः।

---

**ईषदिति**। ईषत्स्फुटैः किंचिद्विकसितैरव्यक्तरागैः कोमलपल्लवाग्रैश्च ललितैः कुड्मलैर्मुकुलैश्च मनोभिरामैः वराः सुन्दराश्च ता वल्ल्यो लताश्च तासां विभ्रमैर्विलासैर्वनश्रीर्नवयौवनत्वं गता प्राप्तेत्यर्थः। अत्र समासोक्तिः काव्यलिङ्गं चालङ्कारौ। उपजातिवृत्तम्।

**नवकिसलयेति**। नवकिसलयानां नवपल्लवानां रागेण समन्तादञ्जितोऽयं रसाल आम्रवृक्षो मदेन कलानां कोकिलानां मनांसि हरति। अलिकुलानां गुञ्जितेनाकुलं तद्बकुलं गन्धवाहं पवनं मृदुलः कोमलश्चासौ सुरभिगन्धिश्च सुरभिर्गन्धो यस्य तादृशं करोति। अत्र-'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इत्यनेन गन्धशब्दस्य समासान्त इकारः। मालिनीवृत्तम्।

( ततः प्रविशति यथानिर्दिष्टः सखीजनः )

**सख्यः**—अहो दिष्ट्या संप्राप्ते अस्मत्प्रियसख्यौ ।

**संयोगिता**—इदानीं प्रवर्तन्तां वो वसन्तकेलयः ।

**सख्यः**—( अन्योऽन्यम् ) एहि एहि

(इति खेलन्ति)

**चातुरिका**—सखि रमणीयोऽयमुपक्रमः । यदेताः

वासन्तीकलिकास्रजः करयुगे सुस्निग्धवेण्यां तथा
कण्ठाग्रे नवमालिकासुमनसां हारं मनोहारिणम् ।
हस्ते तामरसं शिरीषकुसुमं धृत्वा च ताः कर्णयोः
खेलन्त्यो नवयौवनास्तु दधते साक्षाद्वसन्तद्युतिम् ॥३॥

**संयोगिता**—एवमेव । सर्वत्रापि भवति नयनगोचरो वसन्तस्यैव विलासः ।

**चातुरिका**—अयि पश्यात्र शृङ्गक्रीडारतानां सखीनां विस्रम्भचेष्टितम् ।

परस्परं वर्णजलं सहेलं
सुवर्णशृङ्गैरभिषेचयन्त्यः ।
सायंतनीं सूर्यमरीचियोगजां
गता युवत्यः शरदभ्रशोभाम् ॥ ४ ॥

**संयोगिता**—एतास्तु वर्णजलैः स्नापिताः शिथिलसंचाराः संवृत्ताः । तदहृतवसनपरिधानाय प्रेरय ।

---

**वासन्तीति** । अत्र निदर्शनाऽलङ्कारः । शार्दूलविक्रीडितं च वृत्तम् ।

**परस्परमिति** । सुवर्णेन निर्मितैःशृङ्गैर्यन्त्रविशेषैः सहेलं सक्रीडं वर्णै रागै रञ्जितं जलं परस्परमभिषिचयन्त्यो युवत्यः सायंतनीं सूर्यस्य ये मरीचयः किरणास्तेषां योगेन स्पर्शेन जातां शरत्समयस्याभ्रस्य मेघस्य शोभां गताः प्राप्ताः । अत्र निदर्शनाऽलङ्कारः । उपजातिवृत्तम् ।

**चातुरिका**–प्रियसख्यः प्रीताऽस्मद्राजपुत्री युष्मत्क्रीडोत्सवेन। तद्विरमत। नूतनवसनालङ्कृताश्च पुनरायान्तु वसन्तपूजामण्डपम्।

**सख्यः**–तथा।

(इति निष्क्रान्ताः)

**चातुरिका**—एताश्च कुङ्कुमरजःप्रक्षेपेणात्र क्रीडन्ति। अयि पश्य

यावच्च कुङ्कुमरजो विनिवारणाय
साच्छादयन्त्यपसृताऽऽननमंशुकेन।
तावत्ससंभ्रममहो परितः स्खलन्ती
सख्योद्धृतोपहसिता परिरम्भिता च॥ ५॥

**संयोगिता**–एषा प्रकृतिप्रगल्भा मदनिका तु दीनां सरलां सततमेवोद्वेजयति।

**चातुरिका**–विलोक्य पुनरत्रभवतीं सा तामाश्वासयति। सखि पश्यात्र कन्दुकक्रीडाम्।

कुसुमकन्दुककेलिपरायणा
नवयुवत्ययि सा मदसंकुला।
सपरिहासमिहालिकुचद्वयं
कठिनलक्ष्यमहो कुरुते मुहुः॥ ६॥

**संयोगिता**–गुरुप्रयत्नेनापि न सिध्यत्यस्याश्चललक्ष्यम्।

**चातुरिका**–अहो जितमनया छलप्रयोगेण।

---

**यावदिति**। अत्रानेकासु क्रियासु कारकस्यैकत्वाद्दीपकालङ्कारः। वसन्ततिलकावृत्तम्।

**कुसुमेति**। कठिनं दुःसाध्यं च तल्लक्ष्यं च कठिनलक्ष्यम्। द्रुतविलम्बितं वृत्तम्।

अस्याः पुनः सजवसंक्रमणश्लथाया
वेण्याश्च्युतं कुसुमगुच्छमभिद्रुता सा ।
यावत्तु कन्दुकधियाऽवनता नताङ्गी
गृह्णाति तावदनया विजिता सलीलम् ॥ ७ ॥

**संयोगिता**—प्रमोदातिशयोद्धते एते पुनर्मत्तमयूरीनृत्यं विडम्बयतः ।

अन्योऽन्यदक्षिणकराङ्गुलिबन्धमेवं
वेगाद्विधाय समुदं परिवर्तमाने ।
वातोन्नतान्ततरले नवरागरम्ये
वामेन ते मुहुरधः कुरुतोऽन्तरीये ॥ ८ ॥

**चातुरिका**—कन्दुकक्रीडापरिश्रान्ता सा त्वपसरत्यलसगमना नितम्बिनी ।

एकाकिनी मञ्जुरसालसंकुलं
निकुञ्जमापल्लवरागरञ्जितम् ।
श्रमापनोदार्थमिता पिकस्य सा
मन्दस्वरेणानुकरोति कूजितम् ॥ ९ ॥

**अस्याःपुनरिति** । सजवं सत्वरं संक्रमणं तेन श्लथायाः शिथिलाया अस्या वेण्याश्च्युतं गलितं कुसुमगुच्छमभिद्रुता सा नताङ्गी अवनता सती यावत्कन्दुकधिया तं कुसुमगुच्छं गृह्णाति तावदनया सलीलं विजिता । अत्र भ्रान्तिमदलङ्कारः । वसन्ततिलकावृत्तम् ।

**अन्योऽन्येति** । वातेनोन्नतावुद्धूतावन्तौ प्रान्तौ ययोस्ते च तरले च वातोन्नतान्ततरले । वामेन वामकरेण । अत्र स्वभावोक्तिरलङ्कारः । वसन्ततिलकावृत्तम् ।

**एकाकिनीति** । श्रमापनोदार्थमेकाकिनी पल्लवानां रागस्तेन रञ्जितं मञ्जुभिः

**संयोगिता**—आवां विलोक्य लज्जितेव सा विरमति।

**चातुरिका**—सखि पश्यात्रातिमुक्तलतामण्डपे नृत्यक्रीडापरं विलासिनीगणम्।

वीणाया मधुरस्वनैरनुगतां हावैर्मनोहारिभि-
गायन्त्यो ललिताक्षराङ्कितपदां भावान्वितां गीतिकाम्।
तिष्ठन्त्यो मुहुरन्तरा युवतयस्तानप्रदानादृता
मुग्धालीकरतालपालितलया नृत्यन्ति लीलालसम् ॥१०॥

**संयोगिता**—सखि नन्दयति खल्वेतासां लावण्यवतीनां सुललितं संगीतम्।

**चातुरिका**—तत्तावदत्र स्फटिकासन उपविशावः।

(इत्युपविश्य शृणुतः)

**सख्यः**—(संगीतमारभन्ते)

( भूपालिरागेण त्रितालेन गीयते। )

पायय तव रसिकां रसपानम् ॥
मोदय सदयं दयिताहृदयम्।
द्योतय सहृदय लतावितानम् ॥ पायय० ॥ १ ॥

सुन्दरै रसालैर आम्रवृक्षैः संकुलं व्याप्तं निकुञ्जं लतागृहमिता गता मा मन्दस्वरेण पिकस्य कोकिलस्य कूजितमनुकरोति। उपजातिवृत्तम्।

**वीणाया इति**। वीणाया मधुराश्च ते स्वनाश्चानुवादनरूपास्तैरनुगतां भावैश्चेतोविकारैर्युक्तां ललितानि च तान्यक्षराणि च तैरङ्कितानि पदानि यस्यास्तां गीतिकां मनोहारिभिर्हावैर्भ्रूनेत्रादिविकारैर्गायन्त्यो मुहुरन्तरा मध्ये तानस्य स्वरप्रस्तारस्य प्रदानं तस्मिन्नादृता निरताः सत्यस्तिष्ठन्त्यो मुग्धाः सर्वविषयस्यज्ञा आल्यः सख्यस्तासां कराणां तालैः पालितो रक्षितो लयो यासां ता युवतयो लीलयाऽलसं यथा स्यात्तथा नृत्यन्ति। शार्दूलविक्रीडितं वृत्तम्।

**भूपालिरागेणेति**। तल्लक्षणमुक्तं लक्ष्यसंगीते ‘ कल्याणीमेलसंजाता भूपाली

तृषिते नयने मनोनिलयने।
त्वयि कुरु लीने प्रिय जहिहि मानम् ॥ पायय० ॥ २ ॥
प्रियतमहीना राधा दीना
गायति सततं तव महिमानम् ॥ पायय० ॥ ३ ॥

**चातुरिका** सखि एहि। एषा वसन्तपूजामण्डपस्य पुष्पित-तरुलतामण्डिता परिसरभूमिः। तत्र तावदुपसरावः।

(इति परिक्रामतः)

**संयोगिता**—(सनिःश्वासं स्वगतम्) कुतोऽयमेकपदे मे मनोऽवसादः। (प्रकाशम्) अयि संप्रति खलु

नवकिसलयश्रीसंकीर्णप्रसूनपरिच्छदा
ललिततरवो नैतेऽप्यल्पं ममालि सुखावहाः।
मधुकरकुलं मन्दं गुञ्जत्तनोत्यधिकां रुजं
प्रियसखि मम त्वेवंप्रायः प्रयास्यति यौवनम् ॥ २१ ॥

बुधसंमता। आरोहे चावरोहेऽपि मनिहीना भवेत्सदा॥ गान्धारः केवलं वादी धैवतोऽमात्य ईरितः। स तिर्गमयोः प्रायस्तत्र रात्रौ समावहेत्॥' इति। अत्रोपवर्णितेन विप्रलम्भोद्दीपकस्य स्मृत्याख्यभावस्य—'कुतोऽयमेकपदे मे मनोऽवसादः' इत्यभिव्यक्तस्य नायिकाविप्रलम्भस्य—हेतुत्वम्। मोदयेत्यत्र छेकानुप्रासः।

**कुतोऽयमिति**। अत्रोद्वेगाख्या पञ्चमी कामदशा। 'यस्मिन्रम्यमरम्यं वा न च हर्षाय जायते।' इत्युक्तेः।

नवकिसलयेति। हे आलि नवकिसलयानां या श्रीः शोभा तया संकीर्णानि प्रसूनानि परिच्छदाः पत्राणि च येषां त एते ललिततरवो ममाल्पमपि सुखावहा न सन्ति। मधुकराणां भ्रमराणां कुलं समूहो मन्दं गुञ्जदधिकां रुजं पीडां तनोति। हे प्रियसखि मम यौवनं त्वेवंप्रायः प्रयास्यति। अत्र विशेषोक्तिर्विभावना चालङ्कारौ। हरिणीवृत्तम्। अत्र तापनाख्यं संध्यङ्गम्। तदुक्तं दर्पणे—'उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।' इति

**चातुरिका**—मा मैवम् । वसन्तोत्सवाराधितो भगवान् कुसुमायुधः पूरयिष्यति ते मनोरथम् । अयि पश्यैष क्रीडानिवृत्तः सखीजनः पुष्पावचयार्थमितस्ततो धावति ।

**संयोगिता**—अहो उत्साहपूर्णोऽयं सखीजनः ।

**चातुरिका**—तव सान्निध्यमात्रेणायमेवं प्रोत्साहितः । अयि अस्ति किंचिद्दर्शनीयम् ।

बालप्रवालकुसुमावचयप्रवृत्ता
संवेष्टिता सहचरीकरवल्लरीभ्याम् ।
मोदेन पल्लवधियाऽङ्गुलिमाददाना
सा वञ्चितापहसिता चलिता सलज्जम् ॥ १२ ॥

**संयोगिता**—प्रकृति समुद्धता खलु नवयौवनाः ।

**चातुरिका**—सखि प्रभाव एव एष भगवतः कुसुमायुधस्य ।

**संयोगिता**—अथ किम् ।

**चातुरिका**—अयि विनिवृत्तोऽयं सखीजनः प्रविशति पूजामण्डपम् । एह्यावामपि तत्रोपतिष्ठावहे ।

(इति परिक्रामतः)

**सख्यः**—उपविशत्वत्र वरासनेऽस्मत्प्रियसखी चातुरिका च ।

**उभे**—एते आवामुपविशावः ।

(इत्युपविशतः)

(सर्वा यथास्थानमुपविशन्ति)

---

**बालप्रवालेति** । बालप्रवालानां कुसुमानां चावचये प्रवृत्ता सहचर्याःकरावेव वल्लरी लते ताभ्यां संवेष्टिता पल्लवधिया मोदेन पुरो वर्तमानामङ्गुलिमाददाना सा सख्या वञ्चितापहसिता सलज्जं चलिता । अत्र भ्रान्तिमदलङ्कारः । वसन्ततिलकावृत्तम् ।

**संयोगिता**—अथ प्रवर्ततां मदनार्चनम् ।

( संयोगिताप्रमुखाः सर्वा मदनमन्त्रं पठन्ति )

साकूतनेत्रान्तविलासजन्यरागस्मितान्याशु मनांसि यूनाम् ।
परस्परं संग्रथयन् सलीलं जयत्यनङ्गो भुवि देवदेवः ॥ १३ ॥

( इति सर्वा मदनप्रतिमामर्चयन्ति )

**मदनिका**—वीणागानेन प्रसादयन्त्वथ भगवन्तं कुसुमायुधम् ।

**सख्यः**—( वीणावाद्येन गायन्ति )

( वसन्तरागेण त्रितालेन गीयते । )

वितरति नतिमयि रतिरमण ।
युवतिजनस्ते रतिरमण ॥
नवसुमसायक वसन्तनायक ।
अलिकुलगायक रतिरमण ॥ वितरति० ॥ १ ॥

वनिताशरण रसिकविभरण ।
भवसंतरण रतिरमण ॥ वितरति० ॥ २ ॥

सुरगणवन्दित निजरतिनन्दित ।
त्रिभुवनानन्दित रतिरमण ॥ वितरति० ॥ ३ ॥

वाञ्छितमर्पय मनांसि तर्पय ।
स्वजनं दर्पय रतिरमण ॥ वितरति० ॥ ४ ॥

**साकूतेति** । साकूतः साभिप्रायो यो नेत्रान्तविलासस्तज्जन्यो यो रागस्तेन स्मितानि अन्वितानि यूनां मनांसि परस्परमाशु सलीलं संग्रथयन् भुवि देवदेवोऽनङ्गो जयति ।

**वसन्तरागेणेति** । अयि रतिरमण मदन युवतिजनस्ते तव नतिं वितरति। नवानि सुमानि कुसुमानि सायका यस्य तत्संबुद्धौ । अत्र छेकानुप्रासवृत्त्यनुप्रासौ शब्दालङ्कारौ ।

**मदनिका**—अभीष्टवरसिध्यर्थं प्रीणयतु पुनरपि संगीतेन भगवन्तं मनोभवं सखीजनः ।

**सख्यः**—(संगीतमारभन्ते)

(बाहाररागेण त्रितालेन गीयते ।)

पाहि मनोभव मदन ।
अरमिह सदयमुपेहि समेहि ॥
अलिकुलसंकुलबकुलसुवासित-
वातविकासितनवरसलसित-
युवजनमानससदन । पाहि० ॥ १ ॥
वलयितपिकसहकारकिसलया-
रुणदयितलयाऽलङ्कृतकलया
निजनुतिनन्दितवदन । पाहि० ॥ २ ॥
प्रणमति वनिता महसि तव रता
शरणमुपगता प्रणयविदलिता
यौवनमाननिकदन । पाहि० ॥ ३ ॥

**वाहाररागेणेति** । तल्लक्षणमुक्तं लक्ष्यगीते 'हरप्रियाख्यमेलाच्च जातो रागः सम्मतः । आधुनिको वाहाराख्यश्चंचलप्रकृतिः मतः ॥ समयोरेव संवादः स्वीकृतोऽत्र विचक्षणैः । वसन्तर्तौ मतं गानं सगत्या स प्रयोगसुन्दरम् । आरोहणे रिहीनत्वं प्रतिलोमे धलोपनम् । इति मर्मविदां मतं भाति सुसंगतम् ॥' इति ।

**पाहीति** । मनो भवः उत्पत्तिर्यस्य तत्संबुद्धौ हे मनोभव मदन त्वमरं सत्वरमिह सदयमुपेहि समेहि । अलिकुलैः संकुलो यो बकुलस्तेन सुवासितो यो वातस्तेन विकासितं नवरसेन च लसितं युवजनानां मानसं सदनं यस्य तत्संबुद्धौ । वलयिताः पिका येषु तेषां सहकाराणां किसलयैररुणं यद्दयितलयं दयितो लीयतेऽस्मिन्निति मानसं तेनालङ्कृतया कलया निजनुत्या निजस्तुत्या नन्दितं वदनं यस्य तत्संबुद्धौ तव महसि महोत्सवे रता निरता शरणमुपगता प्रणयेनानुरागेण विदलिता पीडिता

विजयतामनङ्गो विजयतामनङ्गः ।

(इति तारस्वरेणोद्घुष्य निष्क्रान्तः सखीजनः)

**चातुरिका**—(सस्मितम्) अयि भवतु वाञ्छितवरप्रदस्ते भगवान् मनोभवः ।

**संयोगिता**—(निःश्वस्य भ्रमरबाधां च निरूप्य ससंभ्रमम्) (स्वगतम्) कोऽयं मे मनसि विकारः । (प्रकाशम्) हा नाथ........

(इत्यर्धोक्ते मूर्च्छति)

**चातुरिका**—(ससंभ्रमम्) सखि समाश्वसिहि समाश्वसिहि ।

(इति नलिनीदलेन वीजयति)

**संयोगिता**—(संज्ञां प्रतिपद्य) किमेवं मां वीजयसि ।

**चातुरिका**-प्रियसखि निवारयाम्यहमेनमत्र परिवर्तमानं मधुकरम् । परं च कथय

कमलमुकुलकोमलाङ्गकानि
व्यथयति यः सखि कम्पयन्नजस्रम् ।
अभिनवमकरन्दलोलुपोऽयं
तव हृदि को नु निलीयते मिलिन्दः ॥ १४ ॥

सखि विस्रब्धं देहि मे प्रतिवचनम् ।

---

वनिता त्वा प्रणमति । यौवनस्य मानस्य निकृन्तनो मोचयिता तत्संबुद्धौ । अत्र वृत्त्यनुप्रासः शब्दालङ्कारः ।

**हा नाथेति** । अत्र मूर्च्छा दशमी कामदशा ।

**कमलमुकुलेति** । हे सखि यः कमलानां मुकुलानीव कोमलानि च तान्यङ्गकान्यजस्रं सततं कम्पयन् व्यथयति सोऽयमभिनवश्चासौ मकरन्दः पुष्परसश्च तस्य लोलुपो लुब्धः को मिलिन्दो भ्रमरस्तव हृदि निलीयते प्रच्छन्नं निवसति । अत्राभेदरूपकमलङ्कारः । पुष्पिताग्रावृत्तम् ।

**संयोगिता**—(सनिःश्वासम्) आयि किमेतेन ज्ञातेन । तथापि कथयामि । शृणु । असुलभप्रार्थनाप्रवणमिदं मनः किल दिल्लीश्वरे सुतरां बद्धभावम् । तथा हि·

गतमवनिभुजामधीश्वरस्य
श्रवणपथं विमलं यशो यदा मे ।
प्रियसखि मम मानसे तदानीं
सपदि पदं कृतवानसौ मरालः ॥ १५ ॥

**चातुरिका**—(स्वगतम्) सुसाध्याऽस्ति भ्रमरबाधा किंतु सर्वथा दुःसाध्यैव मरालबाधा । (प्रकाशम्) अप्यनुमतोऽत्र सखीजनः ।

**संयोगिता**—सखि अनभिज्ञाऽसि खल्वनङ्गविचेष्टितस्य यन्मामेवं पृच्छसि । यतः

क्वचिद्गुणानां श्रुतिरेव केवला
क्वचिन्मिथो वीक्षणयोग एव ।
स्वप्ने कदाचित्प्रियदर्शनं पुन-
र्भवत्यलं मन्मथवैभवाय ॥ १६ ॥

**असुलभेति** । अत्र प्रतिमुखसन्ध्यारम्भः । तदुक्तं दर्पणे—'फलप्रधानोपायस्य मुखसन्धिनिवेशिनः । लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ॥' इति । पृथ्वीराजसंयोगितासमागमहेतोरनुरागबीजस्य प्रथमाङ्गोपक्षिप्तस्यात्र चातुरिकया प्रत्यक्षं राज्या च प्रच्छन्नं ज्ञायमानतया किंचिल्लक्ष्यस्य जयचन्देन चोन्नीयमानतया किंचिदलक्ष्यस्योद्भेदात ।

**गतमिति** । अवनिभुजां राज्ञामधीश्वरस्य सार्वभौमस्य पृथ्वीराजस्य त्वभिप्रायः । विमलं यशो यदा मे श्रवणपथं गतं तदानीं सपद्यविलम्बेनासौ मरालो राजहंसो मम मनस्येव मानसे पदं कृतवान् । अत्र यशःश्रवणस्यानुरागहेतुत्वम् । **तदुक्तं दर्पणे**—'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः । दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥' इति ।

अयि नास्त्यवकाशोऽत्र गुरुजनस्याप्यनुमतेस्तत्किं पुनः सखीजनस्य ।

**चातुरिका**—तथापि शृणु ममैकामभ्यर्थनाम् । अयि तेजस्विन्यपि पृथ्वीराजे रिपुरयं तातचरणानामिति नोचितस्ते प्रेमबन्धः ।

**संयोगिता**—( स्वगतम् ) अहो नु खलु तातचरणानामेव हृद्गतं विव्रियते । ( प्रकाशम् ) प्रियसखि

स सम्राट् तेजस्वी—श्रवणसुभगं तेऽत्र वचनं
नितान्तं कान्ते मेऽभिनवमनुरागं द्रढयति ।
पराधीनं चेतस्त्वसमशरविद्धं न हि गुरो
रिपुं वा मित्रं वा क्षणमपि विवेक्तुं प्रभवति ॥ १७ ॥

**चातुरिका**—( पुरतो विलोक्य ) त्वामस्वस्थशरीरामुपश्रुत्येत एवोपागच्छति भट्टिनी ।

( ततः प्रविशति सख्योर्विस्रम्भालापमुपश्रुत्य वृक्षान्तरिता राज्ञी )

**राज्ञी**- वत्से अपि स्वस्थाऽसि ।

**संयोगिता**—कुतो मे स्वास्थ्यम् ।

**राज्ञी**—वत्से अस्थान एव तवायमभिनिवेशः । एवमुत्पथगामिन्या त्वया स्वयमेवात्मा क्लेशपदं नीयते ।

**तेजस्विन्यपीति** । अत्र भेदाख्यं संध्यङ्गं-'भेदः संहतभेदनम्' इत्युक्तेः ।

**स सम्राडिति** । स सम्राट् पृथ्वीराजस्तेजस्वीति तेऽत्र श्रवणसुभगं श्रुतिमनोहरं वचनं कान्ते कमनीये तस्मिन्मे ममाभिनवमनुरागं नितान्तमतिशयेन द्रढयति स्थिरीकरोति । असमाः पञ्च शरा यस्य तेन मदनेन विद्धमतः पराधीनं चेतो गुरोः पितुः रिपुं वा मित्रं वा विवेक्तुमभिज्ञातुं न प्रभवति । अत्र गुणकथनाख्या चतुर्थी कामदशा ।

**संयोगिता**—(सप्रश्रयम्) अम्ब नाहमधर्माभिनिवेशेन पितृकुलं कलङ्कयितुं प्रवृत्ता येनोत्पथगामिनी स्याम्।

रत्नाकरं प्रति शिलोच्चयविस्रुतानां
किं स्रोतसां न विदितं भुवि नीचगत्वम्।
कल्पद्रुमं तु परितो वलिनी लता कि
नात्मोद्गमाद्गुरुकुलं सुरभीकरोति ॥ १८ ॥

**राज्ञी**—वत्से कामयन्ते त्वामत्र समवेतास्तारुण्यश्रियोल्लसन्तो राजपुत्राः। तदस्मत्परिपन्थिनं परित्यज्यान्यतमं च स्वीकृत्य संतोषयावाम्।

**संयोगिता**—अस्थान एव तवायमनुबोधः। यतः

श्रीवल्लभोऽथ कुसुमेषुरमोघकान्ति-
नैवाप्यलं यदपहर्तुमिह प्रवृत्तम्।
जन्मान्तरव्यतिकरव्यतिषक्तमेत-
न्मातः कथं नु हृदयं विनिवारणीयम् ॥ १९ ॥

अम्ब स्वयंवरा हि क्षत्रियकन्यकाः। न च तासामनुरूपानुरागः कदाचिदप्यधर्माय कल्पते। यतः

---

**रत्नाकरमिति**। रत्नाकरं समुद्रं प्रति शिलोच्चयात्पर्वताद्विस्रुतानां प्रवहतां स्रोतसां नदीप्रवाहाणां भुवि नीचगत्वं किं न विदितम्। निम्नगेति व्यवहारप्रसिद्धेर्विदितमेवेत्यर्थः। तु कल्पद्रुमं कल्पवृक्षं परितो वलिनी वेष्टमाना लता आत्मोद्गमाद्गुरुकुलं पितृकुलं किं न सुरभीकरोति सुरभीकरोत्येवेत्यर्थः।

**श्रीवल्लभेति**। श्रीवल्लभो विष्णुरथ चामोघकान्तिः कुसुमेषुर्मदनोऽपि यदिह पृथ्वीराजे प्रवृत्तमपहर्तुं नैवालं नैव समर्थो स्तस्तदन्यज्जन्म जन्मान्तरं तस्य व्यतिकरैः प्रसङ्गैर्व्यतिषक्तं संयुक्तं हृदयं कथं नु विनिवारणीयम्। वसन्ततिलकावृत्तम्।

पत्युरनुवर्तनं खलु विवाहितायाः श्रुतः परो धर्मः ।
मनसो यत्र न वर्तनमम्ब विवाहः कथं स धर्माय ॥ २० ॥

**राज्ञी**—तथाप्यनुल्लङ्घनीयो गुरोर्निदेश इत्येषा धर्ममर्यादा ।

**संयोगिता**—अम्ब नैषा तनयाविषया । यतः पुरा पार्वती हिमवतोऽनिच्छतोऽपि मनीषितं महेश्वरं संगता । अनुचितप्रार्थनाप्रवणमेव मनः पुनर्निरोद्धव्यं गुरुजनेन ।

**राज्ञी**—वत्से अमर्षणस्ते तातः ।

**संयोगिता**—अम्ब किमेवं मां भीषयसे ।

मधुरवचनतो न वा विरोधो-
न्न जननि दारुणदण्डतोऽन्यतो वा ।
अलमिह निजधर्मतः प्रवृत्तं
त्वमपि निवर्तयितुं मनाङ् मनो मे ॥ २१ ॥

**राज्ञी**—(स्वगतम्) अहो कष्टम् । दुश्चिकित्स्योऽस्या आधिः । यद्भावि तद्भवतु । तावदार्यपुत्राय निवेदयामि ।

(इति निष्क्रान्ताः)

**चातुरिका**—(सनिःश्वासम्) प्रियसखि अतः परं न ते भद्रं पश्यामि ।

---

**पत्युरिति** । अत्र मत्याख्यः संचारिभावः । 'नीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः ।' इत्युक्तेः ।

**हिमवतोऽनिच्छतोऽपीति** । अत्रानादरे षष्ठी 'षष्ठी चानादरे' इति । तदुक्तं भविष्योत्तरपुराणे—'कपर्दिनं तु भर्तारं करिष्येऽहं न संशयः ॥ एतन्मे चिन्तितं कार्यं तातेन कृतमन्यथा । तस्माद्देहं परित्यक्ष्ये वरिष्ये न तु केशवम् ॥' इति ।

**अमर्षणेति** । अत्र वज्राख्यं सन्ध्यङ्गं—'प्रत्यक्षनिष्ठुरं वज्रम्' इत्युक्तत्वात् ।

**मधुरेति** । अत्र धैर्याख्यो नायिकालङ्कारः—'मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ।' इति ।

**संयोगिता**—अयि किमेवमुद्विग्नासि ।

स्निग्धे नितान्तं कुपितः पिता मां
वियोजयिष्यत्यथ जीवितेन ।
रुजा हि हृन्मर्मतुदातुराया
वरं विनाशः प्रियविप्रयोगात् ॥ २२ ॥

**चातुरिका**—( ससाध्वसम् ) अहो कथमेषा मदनिका ससंभ्रममत्रागच्छति । किञ्चिदनिष्टं शङ्कते मे हृदयम् ।

( ततः प्रविशति संभ्रान्ता मदनिका )

**मदनिका**—प्रियसखि आदिष्टं महाराजेन यदस्माभिरद्यैव भागीरथीतटोपरि निर्मितं प्रासादं प्रति यातव्यमिति ।

**संयोगिता**—अयि सावशेषमिव ते वचः ।

**मदनिका**—एवमेव । किंतु तत्र न मे वाक् प्रसरति ।

**संयोगिता**—अयि किमेवं विह्वलाऽसि । विस्रम्भेण मां तानादेशं श्रावय ।

**मदनिका**—प्रियसखि यावज्जीवं तत्रैवास्माकमवस्थितिः ।

**संयोगिता**—( सस्मितम् )अयि नैषाऽपकृतिरपि पुनरनुग्रहः । यतः

**यावज्जीवमिति** । अत्र गर्भसन्ध्यारम्भः । तदुक्तं दर्पणे– 'फलप्रधानोपायस्य प्रागुद्भिन्नस्य किंचन । गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ॥' इति । संयोगितायाः कारागृहे संयमनमत्र ह्रासस्तृतीयाङ्के च पृथ्वीराजं प्रति मदनिकायाः संप्रेषणमन्वेषणम् ।

स्मारं स्मारं जीवितेशानुभावं
नित्यं गाने तद्गुणानां प्रवृत्ता ।
निर्बाधं वै कान्तलीनातरङ्गा
स्वायुःशेषं यापयिष्ये प्रियेऽहम् ॥ २३ ॥

( प्रविश्य )

**प्रतिहारी**—सज्जो रथो द्वारि तिष्ठति ।

**संयोगिता**—एत गच्छामो वयं शिरसिकृत्वा महाराजादेशम्

(इति निष्क्रान्ताः)

समाप्तोऽयं वसन्तोत्सवनामा द्वितीयोऽङ्कः ।

**स्मारं स्मारमिति** । अत्र विधानाख्यं संध्यङ्गम् –' सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ।' इत्युक्तत्वात् ।

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्योतन्यां वसन्तोत्सवनामा द्वितीयोऽङ्कः समाप्तः ।



अथ

# तृतीयोऽङ्कः ।

(ततः प्रविशतो राजपुरुषौ ।)

**मानसिंहः**—अये किमिति चिराद्दर्शयसे ।

**समरसिंहः**—अन्यत्र नियुक्तः कदाचिदेवात्रोपैमि ।

**मानसिंहः**—संप्रति क्व ते नियोगः ।

**समरसिंहः**—निहते वालुकरायेऽसमत्सेनापतिना कह्नेन बन्दीकृतास्तस्य सैनिकाः । तदर्थं च निर्मितं नूतनं कारागृहम् । तत्र मे नियोगः

**मानसिंहः**—अथ कनोजाधिपेन प्रक्रान्तस्य राजसूयस्य किं संवृत्तम् ।

**समरसिंहः**—एवं भ्रातुर्वधेन स तु विघ्नितः । परं च संयोगितायाः स्वयंवरार्थं पुनः कनोजाधिपः प्रयतत इति श्रुतं मया कर्णपरंपरया ।

**मानसिंहः**—भद्रारम्भाण्येव श्रेयांसि । तद्यथा राजसूयस्तथैव स्वयंवरोऽपि भविता ।

**समरसिंहः**—भवतु यत्किमपि । अहं तु त्वरयामि नियोगपरिपालनाय ।

**मानसिंह**—अहमपि तावच्चारदर्शनार्थमन्तर्वेश्मन्यवस्थितं महाराजं प्रतिपालयितुं प्रतिष्ठे ।

(इति निष्क्रान्तौ)

इति विष्कम्भकः ।

---

**दर्शयस इति** । अत्र 'णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने' इति सूत्रेणात्मनेपदम् ।

**भ्रातुरिति** । भ्रातुर्वालुकरायस्य ।

**विष्कम्भक इति** । तल्लक्षणमुक्तं दर्पणे–' वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ ' इति

(ततः प्रविशति यथोक्तव्यापारः पृथ्वीराजः)

**पृथ्वीराजः**—(स्वगतम्) अहो विघ्निते ऽपि राजसूये केयं मे मनसि संतापानुवृत्तिः। अथवा

अवश्यमासन्नविपत्तिपूर्वं
श्रुतं मनोऽव्यक्तरुजाऽभिभूतम्।
तदेव भाविन्यपि मङ्गलार्थे
प्रसादमाविष्कुरुते त्वहेतुकम् ॥ १ ॥

अद्यैव प्रत्यागमिष्यन्ति कनोजनगरं प्रेषिताश्चाराः। यतो ज्ञास्यामि जयचन्द्रप्रवृत्तिम्। संप्रति खलु

जातः समेतैर्नरपालसंघै-
रुपासितोऽयं नृपतिर्मदोद्धतः।
उपायसाध्यो यदि नास्त्यपायकृत्
तथापि कार्यः स मया वशानुगः ॥ २ ॥

तच्चारवृत्तान्तमधिगम्य प्राप्तकालं तत्पराभवप्रयोगमन्विष्यामि।

(प्रविश्य)

**द्वारपालः**—जयतु जयतु देवः। एष कोऽपि वैदेशिको द्वारि तिष्ठति।

**पृथ्वीराजः**—शीघ्रमेनं प्रवेशय।

**द्वारपालः**—तथा।

(इति निष्क्रान्तः)

**अवश्यमिति**। आसन्ना चासौ विपत्तिश्च तस्याः पूर्वं मनोऽवश्यमव्यक्तरुजाभिभूतमकारणचिन्तापरं श्रुतं लोके ज्ञातं शेषः। तदेव मनो भाविनि मङ्गलार्थेऽहेतुकं प्रसादमाविष्कुरुतेऽकारणं प्रसन्नं भवतीत्यर्थः।

**जात इति**। समेतैर्मिलितैर्नरपालसंघैरुपासितः सेवितोऽयं नृपतिर्जयचन्द्रो मदोद्धतो जातः। अपायं करोतीत्यपायकृत् स यद्युपायैः सामादिभिः साध्यो न स्यात् तथापि कयाचिद्युक्त्या मया स वशानुगो वशवर्ती कार्यः।

(प्रविश्य)

**चारः**—विजयतां सार्वभौमः।

**पृथ्वीराजः**—अये वीरसिंहः। अप्यस्ति काचित्सविशेषा प्रवृत्ति-रस्मदरातेः।

**चारः**—पूर्वं तावदभिनन्द्यते सार्वभौमो लोकोत्तरविजयश्रीसमागमेन।

**पृथ्वीराजः**—भद्र किमुच्यते।

**चारः**—शृणोतु सार्वभौमः। जयचन्द्रस्य स्वयंवरार्हा कन्या सार्वभौममेव कामयते।

**पृथ्वीराजः**—(सविस्मयं स्वगतम्) अचिन्त्यप्रभावो हि भगवान् कुसुमायुधः।

**चारः**—अनुपमलावण्यशालिन्या तया नन्दनायते राजोपवनम्। सा त्वभिनवयौवना

विकसितजलजाक्षी मुग्धपद्माननश्री-
मुकुलकुचमनोज्ञा स्निग्धनालाङ्गयष्टिः।
निजपरिमललुब्धान्वारयन्ती मिलिन्दान्
लसति ललितलीला पद्मिनी पद्मिनीव॥ ३॥

**नन्दनायत इति**। नन्दनमिवाचरति नन्दनायते। 'कर्तुः क्यङ् सलोपश्च' इति सूत्रेण क्यङ्।

**अथ नायिकावर्णनं विकसितेति**। विकसिते जलजे कमले इवाक्षिणी यस्याः सा मुकुलाविव कुचौ स्तनौ ताभ्यां मनोज्ञा स्निग्धश्चासौ नालः कमल-दण्डश्च तद्वदङ्गयष्टिर्यस्याः सा निजपरिमलेन निजसौरभेण लुब्धान् मिलिन्दान् भ्रमरान् वारयन्ती ललिता लीला यस्याः सा पद्मिनी संयोगिता पद्मिनी कमलिनीव लसति प्रकाशते। पद्मिनीलक्षणमुक्तं रतिमञ्जर्याम्—'भवति कमलनेत्रा नासिकाक्षुद्र-रन्ध्रा। अविरलकुचयुग्मा चारुकेशी कृशाङ्गी॥ मृदुवचनसुशीला गीतवा-द्यानुरक्ता। सकलतनुसुवेशा पद्मिनी पद्मगन्धा॥' इति। अत्रोपमाऽलङ्कारः। शोभाख्यश्च नायिकाऽलङ्कारः। मालिनीवृत्तम्।

**पृथ्वीराजः**—( स्वगतम् ) अहो कथमेवमेकपदे तस्यामिदं बद्धभावं मनो धैर्यं मुञ्चति । ( प्रकाशम् ) अथ त्वया निपुणमवलोकिता सा वरवर्णिनी ।

**वीरसिंहः**—सार्वभौम एकदा मया

कृत्वा बिम्बाधरमवनता साङ्गुलीसंवृताग्रं
हंसद्वन्द्वं प्रकृतिचपलापाङ्गदृष्ट्या पिबन्ती ।
बाला तन्वी कमलवदना चारुकेशी नताङ्गी
दृष्टा राजन् वरतनुलता काऽपि वातायनस्था ॥ ४ ॥

**पृथ्वीराजः**—( स्वगतम् ) अपेक्षते त्ववश्यं तरुवराश्रयमुद्यानलता ।

**वीरसिंहः**—अपि च

उपचितकुचयुग्मेनोन्नता हारकान्ति-
हरति नयनयुग्मं तन्मुखालोकलोलम् ।
अलसगतिरताया नूपुरध्वानमग्नौ
स्वन इव रशनाया मूर्च्छयत्याशु कर्णौ ॥ ५ ॥

**अहो कथमिति** । अत्र भावाख्यो नायकालङ्कारः । 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इत्युक्तेः ।

**कृत्वेति** । हे राजन् साऽवनता सती बिम्ब इवाधरस्तमङ्गुल्या तर्जन्या संवृतमग्रं यस्य तादृशं कृत्वा प्रकृत्या चपला याऽपाङ्गदृष्टिस्तया हंसद्वन्द्वं पिबन्ती निरीक्षमाणा बाला षोडशवर्षदेशीया — 'आषोडशाद्भवेद्बाला' इति वचनात्- तन्वी सुकोमला चारुकेशी नतानि यौवनभरेणेषदवनतान्यङ्गानि यस्याः सा काऽप्यनिर्वचनीयलावण्या वातायनस्था वरा तनुलता यस्याः सा मया दृष्टा । अत्र विलासाख्यो नायिकाऽलङ्कारः । मन्दाक्रान्तावृत्तम् ।

**उपचितेति** । उपचितं विस्तृतं यत्पयोधरयुगं तेनोन्नता हारकान्तिस्तन्मुखालोकलोलं तन्मुखदर्शनसतृष्णं नयनयुग्मं हरत्याकर्षति । अलसा चासौ गतिश्च तस्यां रतायास्तस्या रशनायाः स्वनो नूपुरयोर्ध्वनि शिञ्जितं तत्र मग्नौ कर्णौ आशु मूर्च्छयतीव मोहयतीवेत्यर्थः । अत्रोत्प्रेक्षालङ्कारः । ललिताख्यश्च नायिकाऽलङ्कारः । मालिनीवृत्तम् ।

**पृथ्वीराजः**—( मनोवेगं निरुध्य स्वगतम् ) हृदय समाहितं भव । ( प्रकाशम् ) कथं तत्र प्रचलति स्वयंवरकार्यम् ।

**वीरसिंहः**—पर्युत्सुकायाः संयोगिताया भावबन्धमभिज्ञातुमुपक्रान्ते वसन्तमहोत्सवेऽर्धप्रत्यागतसंज्ञया तयाऽऽविष्कृतः सार्वभौमानुरागः ।

**पृथ्वीराजः**—( स्वगतम् ) अयि मुग्धे प्रतारिताऽसि खलु सखीजनेन । ( प्रकाशम् ) ततस्ततः ।

**वीरसिंहः**—दृढानुरागपरवशा सा तु दुरात्मना जयचन्देन भागीरथीतीरे नूतनं प्रासादं-अथवा काराग्रहं—निर्माय तत्र बन्दीकृता ।

**पृथ्वीराजः**—वीर सद्यस्त्वं पुनरपि कनोजनगरं प्रतिष्ठस्व ।

**वीरसिंहः**—यथाज्ञापयति सार्वभौमः ।

( इति निष्क्रान्तः )

**पृथ्वीराजः**—( स्वगतम् ) अयि बाले मदभिनिवेशमात्रेणानुभूयते त्वयेदृशी दुरवस्थेति सुव्यक्तमेव । परं त्वत्र पर्याकुलं मे मनः किंकर्तव्यतामूढं संपद्यते । तन्मन्त्रिभिरनुमतेन पथा प्रयतिष्ये । यतः

नितान्तविद्वेषपरोऽस्ति तद्गुरु-
बाला त्वियं मय्यनुरागविह्वला ।
कथं दुराधर्षमृगेन्द्रकन्दरा-
गताऽवनीया हरिणीव सा मया ॥ ६ ॥

( प्रविश्य )

**द्वारपालः**—देव कोऽपि यवनतापसो द्वारि तिष्ठति ।

---

**नितान्तेति** । तस्या गुरुः पिता नितान्तमत्यन्तं विद्वेषः परो यस्य तादृशोऽस्ति । इयं बाला संयोगिता तु मय्यनुरागेण विह्वलाऽस्ति । दुराधर्षा दुराक्रमा या मृगेन्द्रस्य सिंहस्य कन्दरा गुहा तां गता हरिणीव सा मया कथमवनीया रक्षणीया । अत्रोपमाऽलङ्कारः । तापनं नाम संध्यङ्गं—‘ उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ।’ इत्युक्तेः । उपजातिवृत्तम् ।

**पृथ्वीराजः**—प्रवेशयैनम् ।

**द्वारपालः**—तथा ।

( इतिनिष्क्रान्तः )

( प्रविश्य )

**यवनतापसः**—विजयतां देवः ।

**पृथ्वीराजः**—अपि कुशलं कविवरस्य दुर्गकेदारस्य ।

**यवनतापसः**—अथ किम् । परं तु देवेन पराजित्य बन्दिग्राहं गृहीत्वा विसृष्टः कृतघ्नो यवनराजः पुनरप्याक्रमणमुपक्रमत इति संदिष्टं कविवरेण ।

**पृथ्वीराजः**—( स्वगतम् ) किमसौ दुरात्माऽद्यापि न विरमति । ( प्रकाशम् ) भद्र ब्रूहि कविवरं यदनुगृहीतोऽस्मि पुनरप्यरातिप्रवृत्ति-परिचयेनेति ।

**यवनतापसः**—यद्देव आज्ञापयति ।

(इति निष्क्रान्तः)

**पृथ्वीराजः**—( स्वगतम् ) अहो बत केयमनर्थपरंपरा । यद्

एकतो वरतनुः परिरक्ष्या
सोऽन्यतस्तु यवनो विनिवार्यः ।
क्रन्दितस्य ननु हेममृगेण
लक्ष्मणस्य गमितोऽहमवस्थाम् ॥ ७ ॥

ईदृश्येवाथवाऽविरतपरिवर्तनात्मकस्य संसारचक्रस्य स्वाभाविकी घटना । यतः

विपद्धिपात्ते पुनरेव संपदं
संपत्सदैवानुगता हि दृश्यते ।

---

**एकत इति** । हेम्नः सुवर्णस्य मृगेण मृगच्छद्मना विहरता मारीचेनाक्रन्दितस्य लक्ष्मणस्यावस्थां गमितः प्रापितोऽहमित्यर्थः । अत्र निदर्शनाऽलङ्कारः । स्वागतावृत्तम् ।

**विपदिति** । अत्रार्थान्तरन्यासोऽलङ्कारः । उपजातिवृत्तम् ।

पक्षे सिते चन्द्रकलोपचीयते
सितेतरे सा परिहीयते क्रमात् ॥ ८ ॥

(प्रविश्य)

**द्वारपालः**—देव पत्रहस्ता काऽपि मदनिकेति नामधेया युवती कनोजनगरान्निजमागमनं ख्यापयन्ती द्वारि तिष्ठति ।

**पृथ्वीराजः**—सत्वरमेनां प्रवेशय ।

**द्वारपालः**—तथा ।

(इति निष्क्रान्तः)

**पृथ्वीराजः**—(स्वगतम्) अपि नाम स्यान्मे प्रणयिन्या मदनलेखः

(प्रविश्य)

**मदनिका**—विजयतां लोकनाथः ।

**पृथ्वीराजः**—स्वागतमत्रभवत्यै ।

**मदनिका**—अपि स्मर्यते महानुभावेन यदासीदत्र देवानुग्रहशालिनी कर्णाटकीति ।

**पृथ्वीराजः**—आं सा तु कनोजेश्वरान्तःपुरपरिचारकगणे नियुक्ता वर्तत इति श्रुतमस्माभिः ।

**मदनिका**—एवमेव । सैषा कर्णाटक्यस्मत्प्रियसख्याः संयोगितायाः प्रेममात्रम् ।

**पृथ्वीराजः**—(स्वगतम्) अहो धन्यासि कर्णाटकि । यदरातिश्रिताया अप्युज्जृम्भते तेऽचला राजभक्तिः । (प्रकाशम्) अपि कुशलं तव प्रियसख्याः ।

**मदनिका**—ज्ञापयिष्यति तन्महानुभावमेषा प्रियजनपत्रिका ।

(इति पत्रिकामर्पयति)

---

**मदनलेख इति** । तदुक्तं दर्पणे—'लेखप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः । दूतीसंप्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते ॥' इति ।

**पृथ्वीराजः**—( आदायोद्घाटय वाचयति )

एषा महानुभावस्य भूतपूर्वा परिचारिका साष्टाङ्गं प्रणिपत्य विज्ञापयति । यदधीश्वरे बद्धभावा मे प्रियसखी प्रापिताऽनुकम्पनीयामवस्थां मदनहतकेन । संप्रति खलु सा

प्रियजनपरिहासं तर्जयन्ती सरोषं
परिजनमनिमित्तं चाक्षिपन्ती विनीतम् ।
मदनदहनदग्धा म्लानगात्री सखी मे
श्वसिति नरपते ते संगमाशानिबद्धा ॥ ९ ॥

तदुभयोः स्नेहपरवशाया ममास्त्येकमेवात्र विज्ञाप्यम् । यत्

समुद्गतां जीवितसंशयं सखीं
सपद्युपेत्यार्हसि देव रक्षितुम् ।
त्वदाश्रया त्यक्ष्यति जीवितं चेत्
तस्या यशस्ते पुनरेव वाच्यता ॥ १० ॥

इति । अत्रास्त्यनुबद्धः प्रियसख्या स्वहस्तेन लिखितो मदनलेख इति ।

**मदनिका**—देव यथार्थमेव लिखति कर्णाटकी ।

**पृथ्वीराजः**—( मदनलेखं वाचयति )

**प्रियजनेति** । हे नरपते प्रियजनस्य परिहासं नर्मवचः सरोषं तर्जयन्त्यवगणयन्ती विनीतं च परिजनं दासीगणमनिमित्तमाक्षिपन्ती मदन एव दहनाऽनलस्तेन दग्धा अत एव म्लानगात्री मे सखी संयोगिता ते तव संगमाशानिबद्धा सती श्वसिति जीवति । अत्र व्याध्याख्या कामदशा—' व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः '—इत्युक्तेः ।

**समुद्गतामिति** । हे देव जीवितस्य संशयं समुद्गतां संप्राप्तां सखीं सपद्यविलम्बेनोपेत्य त्वं रक्षितुमर्हसि । त्वमाश्रयो यस्याः सा त्वदाश्रया जीवितं त्यक्ष्यति चेत्तदा तस्या यशस्ते पुनस्तव तु वाच्यता लोकापवाद एव ।

निर्घृणमनसिजविशिखैर्विलुप्यमानां त्वदाश्रयामबलाम् ।
प्राणेश्वर परिपालय परमशरण्यः श्रुतस्त्वमार्तानाम् ॥ ११ ॥

(निश्वस्य स्वगतम्) हा प्रियतमे नायं मनसिजो निर्घृणः किंत्वहमेव । (प्रकाशम्) अपि सततं संनिहिता वर्तते कर्णाटकी ।

**मदनिका**—देव तयैव समाश्वासिताऽस्मत्प्रियसखी कथमप्याशाबन्धेन कालं यापयति ।

**पृथ्वीराजः**— (स्वगतम्) अहो अनर्थप्राया हि राजवृत्तिः । यत्कार्यबाहुल्यान्न स्मर्यते स्मरणार्हम् । (प्रकाशम्) मदनिके इदानीमेव भवति मे स्मृतिगोचरा प्रागेव चन्दकविनिवेदिता तव प्रियसख्याः प्रणयप्रवृत्तिः ।

मदर्थं क्लिश्यन्तीं सुतनुमपि विज्ञाय सुहृदः
प्रमत्तेनैवाहो न खलु कलितं तत्प्रियवचः ।
मयैवैवं बाला कठिनहृदयेनाविमृशता
दशामेतां नीता कुसुमसुकुमारा प्रणयिनी ॥ १२ ॥

**मदनिका**—नार्हति देव एवमात्मानमुपालब्धुम् ।

---

**निर्घृणेति** । हे प्राणेश्वर निर्घृणो निर्दयश्चासौ मनसिजो मदनश्च तस्य खैर्बाणैर्विलुप्यमानां निहन्यमानां त्वमेवाश्रयो यस्यास्तां त्वदाश्रयामबलां बलहीनामत एव पराधीनां मां परिपालय रक्ष । त्वमार्तानां दुःखितानां शरणे साधुः शरण्यः परमश्चासौ शरण्यश्च परमशरण्यः श्रुतो लोके विख्यात इत्यर्थः । अत्र काव्यलिङ्गमलङ्कारः ।

**मदर्थमिति** । सुहृदश्चन्दकवेर्मदर्थं क्लिश्यन्तीं सुतनुं विज्ञायापि प्रमत्तेनैव मयाहो तस्य प्रियं च तद्वचश्च तत्प्रियवचो न कलितं नावधारितम् । एवमेषा कुसुममिव सुकुमारा प्रणयिनी बाला कठिनं हृदयं यस्य तेनाविमृशता मयैवैता दशा नीता अत्र पश्चातापनामा नाट्यालङ्कारः—'मोहावधीरितार्थस्य पश्चात्तापः स एव तु'-इत्युक्तेः । शिखरिणीवृत्तम् ।

**पृथ्वीराजः**–अयि मदनिके ब्रूहि मद्वचनात् कर्णाटकीम् । यत्त्वदधीनमेव मे प्रियतमाया जिवीतम् । तत्सर्वात्मना रक्षिनाम् । प्रस्थास्येऽद्यैव कनोजनगरमिति । पत्रिकां चैतां प्राणिपातपुरःसरं प्रियतमायै निवेदय ।

( पत्रिकां लिखति–स्वगतम् )

अयमागतो जनस्ते प्रणयपरवशः स्मरोषितः शरणम् ।
को नु यदृच्छोपगतं पीयूषरसं न सेवते दयिते ॥ १३ ॥

मदनिके गृहाणेमाम् ।

( इत्यर्पयति )

**मदनिका**–( गृहीत्वा ) यद्देव आज्ञापयति ।

( इति निष्क्रान्ता )

**पृथ्वीराजः**–( स्वगतम् ) निश्चितमेव मेऽद्य प्रस्थानम् । यावदामन्त्रये महिषीम् । कः कोऽत्र भो. ।

( प्रविश्य )

**द्वारपालः**–आज्ञापयतु देवः ।

**पृथ्वीराजः**–अन्तःपुरमार्गमादेशय ।

**द्वारपालः**–इत इतो देवः ।

( उभौ परिक्रामतः )

एतदन्तःपुरद्वारं प्रविशतु देवः । ( इति निष्क्रान्तः )

( प्रविश्य )

**पृथ्वीराजः**–अप्यनुकूला उपचाराः । ( इत्युपसर्पति )

---

**अयमागत इति** । प्रणयेन परवशः स्मरेणोषितो दग्धो जनस्ते शरणमयमागतः । हे दयिते यदृच्छयोपगतं पीयूषरसममृतरसं को नु न सेवते सर्व एव सेवन्त इत्यर्थः ।

( ततः प्रविशत्यासनस्था महिषी )

**इच्छिनीकुमारी**—आर्यपुत्र मृगयाप्रियस्य ते चिरादर्शनमेव ममोपतापकारणम्। अत्र किं करिष्यन्ति चिकित्सकाः।

**पृथ्वीराजः**—देवि मिथ्यैष आक्षेपः। संप्रति तु राजकार्यव्यग्रस्य मे निवृत्तो मृगयाव्यापारः।

**इच्छिनीकुमारी**—तत्किमेवं व्यवहितसमयेनात्मानं दर्शयत्यार्यपुत्रः।

**पृथ्वीराजः**—देवि दुर्वाह्यो हि राज्यभरः। यतः

निगृह्य दुष्टाननुगृह्य सज्जनान्
प्रजाः स्वयं पालयतो महीभुजः।
अनिच्छतोऽप्यस्ति दिशो दिगन्तरं
दिनेशवच्चङ्क्रमणं न च स्थितिः ॥ १४ ॥

इदानीमप्यापतितः प्रयाणप्रसङ्गः। तदनुजानीहि मां कनोजनगरं प्रति सञ्चाराय।

**इच्छिनीकुमारी**—सुखाः सन्तु ते पन्थानः। ( दीपं निर्वर्ण्य ) अहो ज्वलत्यपि प्रदीपे कोऽयं प्रकाशापकर्षः।

कस्तूरिकाक्तमृदुनिर्मलतूलवर्तिः
सैवास्ति पूर्णमपि तत्स्फटिकाच्छपात्रम्।

---

**निगृह्येति**। दुष्टान्निगृह्य सज्जनाननुगृह्य स्वयं प्रजाः पालयतो महीभुजोऽनिच्छतोऽपि दिनेशवद्दिशो दिगन्तरं चङ्क्रमणं परिभ्रमणं भवति। स्थितिरेकावस्थानं च न भवतीत्यर्थः। वंशस्थवृत्तम्।

**कस्तूरिकेति**। कस्तूरिकया अक्ता लिप्ता मृद्वी च निर्मला चासौ तूलवर्तिश्च सैवास्ति। चन्दनभवेन स्नेहेन पूर्णं स्फटिकस्याच्छं पात्रं तदेवास्ति। तथाऽपि हे प्रियतमे कथं प्रदीपो मन्दं मन्दं ज्वलति। अत्रोज्ज्वलनरूपकार्यस्य कारणसत्वेऽप्यनुत्पद्यमानत्वाद्विशेषोक्तिरलङ्कारः। अत्र प्रदीप इव त्वमपि कथं मन्दानुरागः संवृत्त इति ध्वनिः। वसन्ततिलका च वृत्तम्।

स्नेहेन चन्दनभवेन तथापि मन्दं
मन्दं कथं प्रियतम ज्वलति प्रदीपः ॥ १५ ॥

**पृथ्वीराजः**—प्रिये शृणु तत्र कारणम् । अद्य खलु प्रवृत्ते वसन्ते तत्सहायस्य दाक्षिणानिलस्येदं विचेष्टितम् ।

मन्दानिलसंचारश्चालयतीमां नताङ्गि दीपशिखाम् ।
वात्सल्यपोषितामपि गुरुसदनगतामनङ्ग इव वनिताम्
॥ १६ ॥

**इच्छिनीकुमारी**—एवमेतत् ।अथ कदार्यपुत्रस्य पूर्णचन्द्रावदातं मुखं पुनर्द्रक्ष्यामि ।

**पृथ्वीराजः**—पक्षावसानेन भविष्यति मे पुनरागनम् । तद्राजकार्याणि निर्वहन्ती परिपालय तावदन्तरम् ।

**इच्छिनकुमारी**—तथा । अथ स्वापाकुला नोत्सहेऽहमत्र चिरमवस्थातुम् । तद्गच्छामि शयनगृहम् ।

( इति निष्क्रान्ता )

**पृथ्वीराजः**—( स्वगतम् ) गता देवी । अहमपि तावत्किकर्तव्यतानिर्णयाय मन्त्रगृहमुपैमि ।

(नेपथ्ये)

**विदूषकः**—अहो कथमेवं भूतोपसृष्ट इवायं पार्श्ववर्तिनमपि मां सततमुपेक्षते ।

**पृथ्वीराजः**—( आकर्ण्य ) अपि संनिहितो मे प्रियवयस्यः ।

---

**मन्दानिलेति** । हे नताङ्गि मन्दश्चासावनिलश्च तस्य संचार इमां दीपशिखां चालयति । वात्सल्येन पोषितां गुरोः पितुः सदनं गृह गता स्थितां वनितामनङ्ग इव । अत्रोपमाऽलङ्कारः ।

**विदूषक इति** । तल्लक्षणमुक्तं दर्पणे—‘ कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः॥’- इति ।इत आरभ्य विदूषकनिष्क्रमणान्तो हास्यरसः प्रधानरसपोषकः ।

(प्रविश्य)

**विदूषकः**—(स्वगतम्) अये प्रकृतिमापन्न इव लक्ष्यते। (प्रकाशम्) भो वयस्य त्वामेवमुद्विग्नमानसं वीक्ष्य च्छिद्यते मे हृदयमर्म। अप्यनामयं ते भद्र।

**पृथ्वीराजः**—(निःश्वस्य) वयस्य प्रार्थितविषयानधिगमे कथं मेऽनामयम्।

**विदूषकः**—(विहस्य) अये मृगयाभिरतस्य ते विषयान्तराधिगमः पुनः क्लेशायैव।

**पृथ्वीराजः**—मूढ मृगलोचनापहृतं मे मनो न कुतोऽपि प्रसादमधिगच्छति।

**विदूषकः**—(स्वगतम्) स्थान एवास्य मृगयाप्रियस्याभिनिवेशः। (प्रकाशम्) भो वयस्य अथ मृगयाशीलस्य तवाप्यसुलभं मृगलोचनम्।

**पृथ्वीराजः**—(स्वगतम्) अहो कथमयं वेदाभ्यासजडो मयानुनेयः। तावत्कथयामि तं यथातथम्। (प्रकाशम्) मित्र अस्ति कनोजाधिपस्यानुपमलावण्यशालिनी कन्या संयोगिता नाम।

**विदूषकः**—आं ज्ञातमेव तवोपतापकारणम्। (साविस्मयम्) अहो भविता त्वमद्य षोडशसहस्रस्त्रीसमेतोऽपरो वासुदेवः।

**पृथ्वीराजः**—मित्र कथमप्येतत्स्त्रीरत्नं त्ववश्यं संपादनीयम्।

**विदूषकः**—अप्येषा प्रत्यक्षीकृता त्वया। अन्यथा कदाचिज्जाम्बवतीसदृश्यपि स्यात्ते नवसुंदरी।

**पृथ्वीराजः**—मिथ्यैवैष ते वितर्कः। तया त्वधरीकृताऽमरविलासिन्यो लावण्यातिशयेनेति साक्षाद्वीरसिंहः कथयति।

---

**प्रार्थितेति**। प्रार्थितो यो विषयः पदार्थो देशो वा तस्यानधिगमे।

**मृगलोचनेति**। मृगस्य लोचने इव लोचने यस्याः सा तया, मृगस्य लोचनं मृगलोचनं तेन वाऽपहृतम्।

**विदूषकः** तद्भवतु ते कार्यसिद्धिः ।

**पृथ्वीराजः**--प्रतिगृहीता विप्राशिषः ।

**विदूषकः**—परं चास्यां संलग्नो यदि मित्रं विस्मरिष्यसि तदा तु तव सर्वथा कार्यहानिरेवेति ब्रह्मवाक्यं सम्यगवधारय ।

**पृथ्वीराजः**—(सस्मितम्) अत्र विस्रब्धो भव ।

(प्रविश्य)

**प्रतिहारी**—उपस्थिता मन्त्रिणो देवस्यादेशं प्रतीक्षन्ते ।

**पृथ्वीराजः**—कार्यबाहुल्यादाकुलोहमामन्त्रये प्रियवयस्यम् ।

**विदूषकः**—सुगुप्ताः सन्तु ते मन्त्राः ।

**पृथ्वीराजः**—दण्डपाल मन्त्रगृहमार्गमादेशय ।

**प्रतिहारी**—इत इतो देवः ।

(उभौ परिक्रामतः)

एतन्मन्त्रगृहद्वारं प्रविशतु देवः ।

(इति निष्क्रान्ता)

(प्रविश्य)

**पृथ्वीराजः**—स्वागतं मन्त्रिवरेभ्यः ।

**मन्त्रिणः**—(उत्थाय) जियतां सार्वभौमः ।

(इति पृथ्वीराजमनूपविशन्ति)

**पृथ्वीराजः**—(सनिःश्वासम्) कवीश्वर कथमपि रक्षणीया मदनुरागविक्लवा संयोगिता ।

ज्ञेया वयस्य तरसा सुतनोः प्रवृत्ति-

स्ताताधमेन कुपितेन विवासितायाः ।

---

**ज्ञेया वयस्येति** । हे वयस्य कुपितेनाधमश्चासौ तातश्च ताताधमस्तेन विवासितायाः सुतनोः प्रवृत्तिस्तरसाऽविलम्बेन ज्ञेया । विरहासहिष्णुर्विरहमसहमाना सा तु कदाचिद्विवशा सत्यात्मविलयाय स्वविनाशाय मनो युञ्जीत । अत्रौत्सुक्याख्यो व्यभिचारिभावः ‘ इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ’ इत्युक्तत्वात् ।

युञ्जीत सा तु विवशा विरहासहिष्णु-
भग्नाशमात्मविलयाय मनः कदाचित् ॥ १७ ॥

तच्चिन्त्यतां कोऽपि प्रियतमासमागमोपायः।

हरिसिंहः—सार्वभौम तरसैवाक्रमणीय एष निर्घृणारातिः।

अद्य प्रयातु गजवाजिरथाधिरूढ-
शस्त्रप्रहारपटुवीरभटोत्कटं ते।
सैन्यं प्रमत्तपरिपन्थिपराभवाय
सम्राड् यदिच्छसि कथं भुवि तद्दुरापम् ॥ १८ ॥

कन्हः—राजसूयोत्सवसमेतै राजसैन्यैः संप्रति समेधितं प्रत्यर्थिसामर्थ्यम्। अतः

रिपुर्महान् कोशबलप्रदीप्तो
जातः किलायं सहसाऽप्रधृष्यः।
छलावरुद्धः स तु दुर्मदान्धो
वन्यः करीवाशु वशं प्रयायात् ॥ १९ ॥

चन्दः—ममाप्येतदेव संमतम्। तदत्र दुःसाध्येऽर्थे सुसाध्यं प्रयोगं परिकल्पयामि। शृणोतु सार्वभौमः।

मित्रेष्वमित्रेष्वपि वाग्विलासाः
कवीश्वराः सन्ति सुखप्रचाराः।

**अद्य प्रयात्विति**। गजवाजिरथानधिरूढाः शस्त्राणां प्रहारेषु च ये पटवः कुशला वीराश्च ते भटा योधाश्च तैरुत्कटं प्रबलं ते सैन्यं प्रमत्तश्चासौ परिपन्थी शत्रुश्च तस्य जयचन्दस्य पराभवायाद्य प्रयातु। हे सम्राट् यत्त्वमिच्छसि तद्भुवि दुरापं कथं स्यात्। अत्र वसन्ततिलकावृत्तम्।

**रिपुर्महानिति**। कोशेन बलेन सैन्येन च प्रदीप्तः समृद्धोऽयं महान् रिपुः सहसा बलेनाप्रधृष्योऽभेद्यो जातः। स तु दुर्मदेन मिथ्यागर्वेणान्धो विवेकशून्यश्छलावरुद्धो वने भवो वन्यः करी गज इवाशु वशं प्रयायात्।

आमोददानग्रहणप्रवृत्ताः
सर्वत्र चैतेऽनिलवद् व्रजन्ति ॥ २० ॥

तत्सार्वभौमप्रमुखाः सर्वेऽपि सामन्ता विशन्तु मे परिचारकगणम्। एवं प्रच्छन्नमुपसृत्य कनोजाधीश्वरमवधार्य च तस्य सामर्थ्यं यथोचितं विधास्यते।

**आततायीवीरः**—(साक्षेपम्) धन्योऽसि कवीश्वर यत्स्वामिनोऽपि स्वामित्वं संपादयितुमुपक्रमसे।

**कन्हः**—आश्रयणीयोऽस्ति कवीश्वरप्रयोगः। एवमेवाप्रतिहतसंचरा वयं कनोजाधिपराजधानीं प्रवेष्टुं प्रभविष्यामः।

**पृथ्वीराजः**—(सस्मितम्) मयाप्युररीक्रियते कविवरविभावितोऽयं नाद्यप्रयोगः। कविवर

नान्या गतिः प्रियतमामिलने यदि स्यात्
मित्रस्य तेऽनुचरतामुपयामि सद्यः।
प्राणप्रियाहरणदीक्षितफाल्गुनेन
भिक्षुत्वमुत्सवधिया न विडम्बितं किम् ॥ २१ ॥

---

**मित्रेष्विति**। वागेव विलासो येषां ते कवीश्वरा मित्रेष्वमित्रेष्वपि सुखेन प्रचारो गमनं येषां तादृशाः सन्ति। आमोदस्यानन्दस्य दाने ग्रहणे च प्रवृत्तास्ते सर्वत्रानिलवद् व्रजन्ति। वाचो विलासो येनामोदस्य गन्धस्य दाने ग्रहणे च प्रवृत्त इति श्लेषेणानिलपक्षेऽपि विशेषणानि संगच्छन्ते। अत्र श्लेषानुप्राणित उपमालङ्कारः।

**उररीक्रियत इति**। अत्र कपटनामा नाट्यालङ्कारः। तदुक्तं दर्पणे— 'कपटं मायया यत्र रूपमन्यद्विभाव्यते।' इति।

**नान्येति**। यदि प्रियतमामिलनेऽन्या गतिर्न स्यात्तदा सद्य एव मित्रस्य ते तवानुचरतामुपयामि। प्राणा इव प्रिया प्राणप्रिया तस्याहरणे दीक्षितेन दृढनिश्चयेन फाल्गुनेनार्जुनेनोत्सवधिया भिक्षुत्वं न विडम्बितं नानुकृतं किम्। अपि तु विडम्बितमेवेत्यर्थः। वसन्ततिलकावृत्तम्। अत्र युक्त्याख्यो नाट्यालङ्कारः 'युक्तिरर्थावधारणम्' इत्युक्तेः।

तदद्यैव प्रयाणाभिमुखा भवन्तु मे प्रियसामन्ताः। समरसिंह हीनबलस्य यवनस्याक्रमणाद्राष्ट्रं रक्षितुं त्वमत्रैवावहितस्तिष्ठ।

**सामन्ताः**—यथाज्ञापयति सार्वभौमः।

(इति निष्क्रान्ताः)

**पृथ्वीराजः**—मित्र एहि। आवामपि प्रस्थानोद्यमं कुर्वहे।

(इति निष्क्रान्तौ)

समाप्तोऽयं चारसंप्राप्तिनामा तृतीयोऽङ्कः।

---

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्योतन्यां चारसंप्राप्तिनामा तृतीयोऽङ्कः समाप्तः।



# अथ

# चतुर्थोऽङ्कः ।

(ततः प्रविशति राजसभामध्यवर्ती जयचन्दः)

**वणिकौ**—(वीणावाद्येन गायतः)

(केदाररागेण त्रितालेन गीयते।)

माधव यमुनातीरविहारी ॥

मृदुराधाऽधरमधुमधुकर-

नटवरगिरिवरधारी ॥ माधव० ॥ १ ॥

राधायौवनवनवनमाली ।

गोपीजनसुखकारी ॥ माधव० ॥ २ ॥

---

**चतुर्थोऽङ्क इति** । अयमप्यङ्कावतारः पूर्वाङ्कान्ते पात्रैः सूचितत्वात् ।

**केदाररागेणेति** । तल्लक्षणमुक्तं लक्ष्यसंगीते-'कल्याणीमेलके प्रोक्तः केदारो बहुसंमतः । शङ्कराभरणेऽप्यन्ये केचिदाहुर्विपश्चितः ॥ मद्वन्द्वमिह संप्रोक्तं गौणत्वं तीव्रमे यादि । अंशत्वं शुद्धमेऽभीष्टं व्यस्तत्वं चापि तत्स्वरे ॥ रिगोनत्व रोहणे स्यात्पूर्वाङ्गे संमतं सताम् । असत्प्रायत्वमारोहे चावरोहे तु गस्य तत् ॥ पूर्वाङ्गे रिगदौर्बल्यं यथोपरि निरूपितम् । तथैव चोत्तराङ्गेऽपि निधयोस्तत्सुनिश्चितम् ॥' इति ।

**माधवेति** । अयि माधव यमुनातीरविहारी मृदुश्चासौ राधाऽधरश्च तस्य यन्मधु तस्मिन्, मधौ वसन्ते यो मधुकरो भ्रमरस्तादृशश्चासौ नटवरश्चासौ गिरिवरं गोवर्धनं धरतीति गिरिवरधारी च । राधाया वनुत इति वनः प्रार्थयिता यौवनस्य वनो यौवनवनः स चासौ वनमाली चासौ गोपीजनानां सुखकारी च । नयशाली राजनीतिनिपुणोऽविकारी धीरस्त्वं सुमतिं जनय जयपथं च नयास्मानिति शेषः । अत्र यमुनातीरविहारीतिपदेन यमुनातटवर्तिदिल्लीनगराधिपः पृथ्वीराजः गोपीजनसुखकारीतिपदेन बहुवल्लभस्यापि तस्य दाक्षिणनायकत्वं च सूच्यते । जयपथं नयेत्यनेन च त्वं जयचन्दं विजित्य संयोगितां नयेति सूच्यते । अत्र लाटानुप्रासः शब्दालङ्कारः । गेयपदं नाम च लास्याङ्गम् ।

सुमतिमयि जनय नय नयशाली ।
त्वमु जयपथमविकारी ॥ माधव० ॥ ३ ॥

**चन्दः**–(अपवार्य) अये जलधर दत्तावधानो भव । ग्राम्यं नेत्रचापल्यमुत्सृज्य त्वयाऽत्र विवृतकर्णेनैव भाव्यम् ।

**जलधरः**–यदाज्ञापयति भर्ता । (स्वगतम्) अहो मामधिकृत्यैवैषा गीतिः प्रगीयते । तत्संनिहितैवाभिमतार्थसिद्धिरिति तर्कये ।

**जयचन्दः**–कविवर, अनुगृहीता वयमत्रभवतां सान्निध्येन ।

**चन्दः**–महाराज, स्वाभाविकी खल्वेषा प्रवृत्तिः कविजनस्य । यतः

भक्ताः परेशं वनिताः पुमांसं
लतास्तरुं धूर्तजनास्तु लुब्धम् ।
खगाश्च नीडं सरितः समुद्रं
व्रजन्ति तद्वत् कवयो नरेन्द्रम् ॥ १ ॥

**जयचन्दः**–(सस्मितम्) तद्धूर्ताः कवयो यशोलुब्धं नृपमुपयन्तीति तात्पर्योपपत्तिः ।

**चन्दः**–(सस्मितम्) महाराज पूर्वोक्ता भक्तादयस्तु स्वाश्रयं स्वार्थसिद्ध्यै व्रजन्ति परं च सरिद्वत् कविततिस्तु सर्वमपि स्वीयं मधुररसौघमुपहारीकर्तुमेवेति ममाभिप्रायः ।

**जयचन्दः**–कविवर प्रसन्नोऽस्मि भवतां वाग्विलासेन । मन्त्रिन् महार्हद्रव्यवस्त्रालङ्कारादिभिः कवीश्वरं सत्कृत्य तोषय ।

**सुमतिः**–तथा ।

(इति यथोक्तं वितरति)

---

**जलधर इति** । अत्र जलधरो जलधरच्छद्मना स्थितः पृथ्वीराजः ।

**भक्ता इति** । अत्र मालोपमाऽलङ्कारः । उपजातिवृत्तम् ।

**तात्पर्येति** । तात्पर्यस्य विवक्षितार्थस्योपपत्तिरुपपादनम् ।

**चन्दः**—वर्धतां महाराजः श्रिया यशसा च।

**जयचन्दः**—प्रतिगृहीतमाशीर्वचनम्। ( विचिन्त्य ) अपि च कवीश्वर कोऽयं युष्मन्मित्रस्य दुराग्रहो यदसौ धर्मकार्येष्वपि मेऽन्तरायो भवति।

**चन्दः**—महाराज कथमेतत्संभवति धर्मसंस्थापनव्रतस्य दिल्लीश्वरस्य।

**जयचन्दः**—तत्कथमनेन नानुमतमस्मन्निमन्त्रणम्।

**चन्दः**—महाराज राजपुरोहितेन प्रधानमन्त्रिणा च निवारितेनाऽपि भवता कथमादृतो राजसूयोपक्रमः।

**जयचन्दः**—( अपवार्य ससंभ्रमम् ) मन्त्रिन् आश्चर्यं कोऽयं मन्त्रभेदः।

**सुमतिः**—(अपवार्य) देव समाहितो भव।

**जयचन्दः**—(मनः समाधाय) स्वतन्त्रा हि नरपतयः। को वैतान् प्रवर्तयितुं निरोद्धुं वा प्रभवति।

**चन्दः**—महाराज धर्मतन्त्रा नृपाला इत्येव समञ्जसम्। यतः स्वच्छन्दविहारिणस्ते त्वचिरेणैव वियुज्यन्ते राज्यश्रिया।

ऐश्वर्यमत्तो नहुषो निमिश्च
सुयोधनोऽनर्थकरश्च वेनः।
एते तथाऽन्येऽपि च सार्वभौमा
विहाय धर्मस्थितिमेव नष्टाः ॥ २ ॥

**जयचन्दः**—भवतु। परं च राजसूयं वितन्वद्भिरस्माभिः किमधर्मं प्रवृत्तम्।

**ऐश्वर्यमत्त इति**। अत्र निदर्शनाख्यं लक्षणम्। तदुक्तं दर्पणे-' यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम्। परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥' इति।

**चन्दः**—सार्वभौमस्यैव विहिते राजसूये महाराजस्य प्रवृत्तिः कथं धर्माय ।

**जयचन्दः**—( सरोषम् ) आः किमुच्यते । तर्हि कः पुनरधिकृतः पृथ्वीराजः ।

**चन्दः**—प्रसीदतु महाराजः। संप्रति तु नास्त्यात्राधिकृतो दिल्लीश्वरोऽपि । परंतु

विततभुजबलोत्कटप्रतापः
प्रथितयशाः शरणार्थिनां शरण्यः ।
मखविधिपरमो भवेत्स सम्राड्
यदि विजहासि धरापते विरोधम् ॥ ३ ॥

**जयचन्दः**—कविवर कोऽयं मयि मिथ्याक्षेपः । स्वमित्रस्य च केयं मिथ्या प्रशस्तिः । अहो कथमेवं समबुद्धयो विद्वांसोऽपि मित्रपक्षपातिनो भवन्ति ।

**चन्दः**—महाराज एष तु लोकप्रत्ययः । परं च जानाति यथार्थं महात्मनामन्तरात्मैव ।

**सुमतिः**—( अपवार्य ) देव अत्रैव पुनः पृथ्वीराजोपस्थितिं शङ्कते मे हृदयम् । पश्य

---

**विततेति** । हे धरापते यदि त्वं विरोधं विजहासि त्यजसि तदा विततौ च तौ भुजौ च तयोरुत्कटः प्रतापो यस्य, प्रथितं यशो यस्य स शरणार्थिनां शरण्यः सम्राड् मखविधिः राजसूयानुष्ठानं परमः प्रधानं यस्य स मखविधिपरमो भवेत् । अत्र सामान्यार्थस्य मखशब्दस्य मखविशेषरूपविवाहहोमरूपार्थप्रतिपादनेन 'शरणार्थिनां शरण्यः' इत्यनेन च संयोगितायाः शरणप्रदत्वेन भाविविरोधपरिहारद्वारा संयोगितोद्वाहरूपं प्रधानफलं सूच्यते । तत्पताकास्थानमिदम् । तदुक्तं दर्पणे— 'द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः । प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥' इति । अतिशयोक्तिरलङ्कारः—'यद्यर्थोक्तौ च कल्पनम्' इत्युक्तेः ।

तेजस्व्ययं नरपते समुपस्थितो वै
पृथ्वीपतिः स्वयमिहानुचरापदेशात् ।
आच्छादितो जलधरैरपि किं विवस्वान्
नाविष्करोति निजमप्रतिमं प्रकाशम् ॥ ४ ॥

**जयचन्द्रः**—( अपवार्य ) सत्यं जलधरवेषधरेणैव पृथ्वीराजेन भवितव्यम् । यतः

आजानुलम्बिदृढमांसलबाहुशाली
संतप्तदीप्तनयनोऽपि मनोऽभिरामः ।
एवं स्वमित्रपरिचारकतां गतोऽपि
स्वाभाविकीं न स पुनः प्रभुतां जहाति ॥ ५ ॥

**सुमतिः**—( अपवार्य ) अद्यैवैनं निग्रहीतुमर्हति महाराजः ।

**जयचन्द्रः**—( विचार्यापवार्य च ) मन्त्रिन् यद्यन्यथा निष्पद्येत तदानीं तु स्यान्मे दारुणो जनापवादः ।

पृथ्वीपतिप्रबलसाहसविक्रमौजः-
संत्रस्त एष नृपतिर्ननु वीतधैर्यः ।

---

**तेजस्वीति** । हे नरपते अनुचरापदेशात् समुपस्थितोऽयं तेजस्वी वै निश्चयेन स्वयं पृथ्वीपतिः पृथ्वीराजोऽस्ति । धरन्तीति धरा जलस्य धरा जलधरा मेघास्तैराच्छादितोऽपि विवस्वान् सूर्यो निजमप्रतिमं प्रकाशं नाविष्करोति किम् । अपि त्वाविष्करोत्येवेत्यर्थः । अत्र दृष्टान्तालङ्कारः । वसन्ततिलकावृत्तम् ।

**आजान्विति** । जानुनी अभिव्याप्य यथा वर्तेते तथा लम्बिनौ च तौ दृढौ मांसलौ च तौ बाहू च ताभ्यां शालते शोभत इति । संतप्ते व्याकुले च ते दीप्ते प्रकाशमाने च नयने यस्य सः । अत्र विरोधाभासोऽलङ्कारः । वसन्ततिलका-वृत्तम्

**पृथ्वीपतीति** । पृथ्वीपतेः पृथ्वीराजस्य प्रबलं यत्साहसं विक्रम ओजश्च तैः संत्रस्तो भीत एष नृपतिर्वीतं नष्टं धैर्यं यस्य स वीतधैर्यो ननु निश्चयेन वर्तत इति शेषः । यद्यस्मात्स संभ्रमेण स विवेकशून्यः सन्नत्र तन्मन्त्रिणश्चन्दस्यानुचरे राजबुद्धिं कुरुते । अत्र वसन्ततिलकावृत्तम् ।

यत्संभ्रमेण कुरुतेऽत्र विवेकशून्य-

स्तन्मन्त्रिणोऽप्यनुचरे स तु राजबुद्धिम् ॥ ६ ॥ इति

**सुमतिः**—( अपवार्य ) तदानीयतां राजसभायां कर्णाटकी संदिग्धार्थनिर्णयाय ।

**जयचन्दः**—( अपवार्य ) आं साधु स्मारितम् । ( प्रकाशम् ) कः कोऽत्र भोः ।

( प्रविश्य )

**प्रतिहारी**—आज्ञापयतु देवः ।

**जयचन्दः**—कर्णाटकीं द्रष्टुमिच्छामि ।

**प्रतिहारी**—यद्देव आज्ञापयति ।

( इति निष्क्रान्तः )

( ततः प्रविशति पृथ्वीराजं दृष्ट्वा मुखमावृत्य चन्दरवेस्तु लब्धसंकेता तदपावृण्वती कर्णाटकी )

**जयचन्दः**—( स्वगतम् ) अहो आश्चर्यम् ।

प्रागावृतं तु वसनेन मुखं क्षणेन

कर्णाटकी किमिति तद्विवृतं करोति ।

अथवा

चापल्यमेव सहजं कुलयोषितां चेद्

व्यक्तं तदा किमुत वारविलासिनीनाम् ॥ ७ ॥

**चन्दः**—( स्वगतम् )

व्यामोहयन्ती ललिताङ्गविभ्रमै-

र्वराङ्गना कामकलाविधिज्ञा ।

---

**प्रागावृत्तमिति** । प्राक् तु वसनेनावृतं मुखं क्षणेन कर्णाटकी किमिति विवृतं करोति । अथवा कुलयोषितां सहजमेव चापल्यं व्यक्तं चेत्तदा किमुत वारविलासिनीनाम् । अत्रार्थापत्तिरलङ्कारः । वसन्ततिलकावृत्तम् ।

**व्यामोहयन्तीति** । कामकलाया विधिः प्रयोगस्तं जनाति सेयं वराङ्गना ललिताङ्गविभ्रमैर्व्यामोहयन्ती सभासद इति शेषः । कादम्बिन्या मेघमालाया

कादम्बिनीमध्यगता स्फुरन्ती
संचारिणीयं चपलेव राजते ॥ ८ ॥

**कर्णाटकी**--जयतु देवः ।

**जयचन्दः**--अयि कर्णाटकि किं त्वयाऽञ्जसाऽपसारितं ते मुखावरणम् ।

**कर्णाटकी**--(सस्मितम्) देव न खलु मया तद् ह्रिया समावृतम्। किंतु

मित्रं विलोक्य पुरते मम पूर्वभर्तु-
स्तस्यादरात्सपदि संवृतमाननं मे ।
एकः पुमान् स पृथिवीपतिरेव यस्माद्
रात्रिर्यथा दिनकरात्समुपैमि लज्जाम् ॥ ८ ॥

**चन्दः**--(स्वगतम्) अहो रक्षिता वयमस्या वारविलासिन्याश्चातुर्योत्कर्षेण ।

**पृथ्वीराजः**--(स्वगतम्) अयि धन्या ते राजभक्तिः ।

**जयचन्दः**--(स्वगतम्) कथमस्यामपि न विश्वसिति मे मनः । (प्रकाशम्) अयि कर्णाटकि अथ प्रकृतिमापन्ना संयोगिता ।

**पृथ्वीराजः**--(स्वगतम्) अहो ममैव मनोगतमनुयुङ्क्ते ।

मध्यं गता स्फुरन्ती संचारिणी चपला विद्युदिव राजते । अत्रोपमाऽलङ्कारः । उपजातिर्वृत्तम् ।

मित्रमिति । मम पूर्वभर्तुः पृथ्वीराजस्य मित्रं चन्दं पुरतो विलोक्य तस्यादरान्न तु लज्जया सपदि मे ममाननं संवृतमासीत् । एकः स पृथ्वीराज एव पुमानस्ति यस्मात् पृथ्वीराजाद्दिनकराद्यथा रात्रिस्तथाऽहं लज्जां समुपैमि । वसन्ततिलका वृत्तम् । अत्र च्छलाख्यं वीथ्यङ्गम् । तदुक्तं दर्पणे- 'अन्ये त्वाहुश्छलं कंचित् कार्यमुद्दिश्य कस्यचित् । उदीर्यते यद्वचनं वञ्चनाहास्यरोषकृत् । वाक्केलिर्हास्यसंबन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥' इति ।

**कर्णाटकी**—महाराज निगृहीतोऽस्या वेदनाप्रकर्षः शिशिरैरुपचारैः'। व्याधिप्रशमनाय त्वपेक्षितः कश्चिन्निपुणो राजवैद्यः।

**पृथ्वीराजः**—( सनिःश्वासं स्वगतम् ) हा प्रिये ननु ममापराधेनैव त्वयानुभूयत एषा दुरवस्था।

**जयचन्दः**—मन्त्रिन् नियोज्यः कोऽपि रसवैद्यः संयोगितायाश्चिकित्सार्थम्।

**सुमतिः**—नास्त्यत्र प्रतीकारान्तरम्।

**चन्दः**—( स्वगतम् ) संप्रति नातिदुरं वर्तते राजकन्यायाश्चिकित्सकः।

**जयचन्दः**—अयि कर्णाटकि त्वं तावदुपचर यथोपतापं संयोगिताम्।

**कर्णाटकी**—यद्देव आज्ञापयति।

( इति निष्क्रान्ता )

**जयचन्दः**—कः कोऽत्र भोः।

( प्रविश्य )

**प्रतिहारी**—आज्ञापयतु देवः।

**जयचन्दः**—प्रापयैनं कविकुलनायक स्वनिवेशम्।

**प्रतिहारी**—इत इत आर्यः। ( इति जयचन्दमाशीर्भिरभिनन्द्योत्थाय सपरिवारश्चन्दः प्रतिहारी च परिक्रामतः )

**राजवैद्य इति**। वैद्यानां राजा राजा चासौ वैद्यश्चेति वा। अत्रामताहरणाख्यं संध्यङ्गम्—'तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्' इत्युक्तेः। 'अपेक्षितो राजवैद्यः'-इत्यनेन भाविपृथ्वीराजसमागमस्य सूचितत्वादिदं पताकास्थानम्।

**रसवैद्य इति**। रसेन पारदेन वैद्यश्चिकित्सकः रसः शृङ्गारोऽस्य वैद्यो वा।

प्रतिहारी—एतद्भवतो निवेशस्थानम् । प्रविशत्वार्यः ।

( इति निष्क्रान्ता )

( सपरिवारं प्रविश्य )

चन्दः प्रेम्णादृता वयं जयचन्द्रेन । परं च सार्वभौमसान्निध्यमाशङ्कत एवास्य हृदयम् ।

कन्हः—कवीश्वर एवं जाताशङ्कः स उपरोत्स्यत्यस्मन्निवेशम् । तदत्र प्रागेव प्रतीकारोऽध्यवसेयः ।

चन्दः—अस्ति ममाप्येतदेवाभिप्रेतम् ।

कन्हः तद्राजभक्त्युज्जृम्भितविक्रमशालिनः संजयरायात्मजस्य लङ्गडीरायस्यास्तु सेनाधिपत्यम् ।

लङ्गडीरायः—शिरसि क्रियते पितृव्यचरणादेशः । कवीश्वर उत्पत्स्यमाने तूपप्लवेऽहमेव नेष्यामि सैनिकनिवहम् ।

पर्याप्त एव रिपुसैन्यविमर्दनार्थ-
मेकोऽप्यहं किमुत वीरभटानुक्लृप्तः ।
खड्गप्रहारपरिलुप्तमदा द्विषो मे
तार्क्ष्यादिवोरगगणा भयविद्रुताः स्युः ॥ १९ ॥

चन्दः—युक्तमेवैतत्क्षत्रप्रवीरस्य राजभक्तस्य ।

कन्हः—तदेहि पर्यटावो युद्धानुगुणप्रदेशप्रकल्पनाय ।

लङ्गडीरायः—तथा ।

( इति निष्क्रान्तौ )

---

पर्याप्त इति । रिपोर्जयचन्दस्य सैन्यस्य विमर्दनार्थं विनाशार्थमहमेक एकाक्यपि पर्याप्तः समर्थः । किमुत वीराश्च ते भटाश्च यो वीरैरनुक्लृप्तो युक्तः पर्याप्तः स्यामत्र किं वक्तव्यमित्यर्थः । मे मम खड्गस्य प्रहारैः परिलुप्तो नाशितो मदो येषां ते द्विषस्तार्क्ष्याद्वैनतेयादुरगगणाः सर्पकुलानीव भयेन विद्रुताः पलायिताः स्युः । वसन्ततिलकावृत्तम्

( नेपथ्ये किङ्किणीक्वणनम् )

**पृथ्वीराजः**—( आकर्ण्य स्वगतम् ) अहो

श्रोत्राभिरामो विपिनेऽपि कोऽयं
विलासिनीनूपुरशिञ्जितस्वनः ।
मन्ये कदाचित्प्रियया प्रवृत्तिं
ज्ञातुं ममैवं प्रहितः सखीजनः ॥ ११ ॥

**चन्दः**—( आकर्ण्य दूरं विलोक्य ) अहो आश्चर्यम् ।

पुष्पितां कमलिनीं प्रकम्पनः
संनिपत्य सरसो विचाल्य किम् ।
प्रेरयत्यभि विविक्तकाननं
कामुको गुरुकुलादिवाङ्गनाः ॥ १२ ॥

**पृथ्वीराजः**—( निपुणं निरीक्ष्य ) आर्य एताः कर्णाटकीपुरःसरा ललना इत एवाभिवर्तन्ते ।

**चन्दः**—मङ्गलसूचकं हि कन्यकाजनदर्शनम् ।

**पृथ्वीराजः**—किं नु खलु स्यादेतासामागमनप्रयोजनम् ।

**चन्दः**— प्रकृतिरसिकानां नवयुवतीनां काव्यरसपिपासामन्तरेण किमन्यत्प्रयोजनं संभाव्यते । अहो

यल्लोकपाला विजितेन्द्रसंपदः
स्वरूपलावण्यगुणा मृगाक्ष्यः ।
वीरा भटा भक्तजनश्च सेवते
धन्यं हि तन्मानधनं कवित्वम् ॥ १३ ॥

**पुष्पितामिति** । प्रकम्पनो महावातः पुष्पाणि संजातान्यस्यास्तां पुष्पितां 'तदस्य संजातमिति तारकादिभ्य इतच्' इति सूत्रेणेतच् प्रत्ययः । कमलिनीं संनिपत्याक्रम्य सरसो विचाल्य कामुको गुरुकुलादङ्गना इव विविक्तकाननमभि प्रेरयति किम् । अत्रोत्प्रेक्षाऽलङ्कारः । रथोद्धतावृत्तम् । अत्र संयोगितायाः गुरुकुलात् हरणरूपप्रधानार्थसूचनेन पताकास्थानमिदम् ।

**पृथ्वीराजः**—( स्वगतम् ) सर्वोऽप्यात्मानमेव बहु मन्यते ।

( प्रविश्य )

**द्वारपालः**—आर्य संभावयितुं संप्राप्तो नवयुवतिगणो द्वारि तिष्ठति ।

**चन्दः**—तावदविलम्बेन प्रवेशय ।

**द्वारपालः**—तथा

( इति निष्क्रान्तः )

( प्रविश्य )

**सख्यः**—जयतु जयत्वार्यः । (इति पुष्पाणि विकीर्य फलान्युपहरन्ति)

**चन्दः**—अपि कुशलं राजमातुस्तत्कन्यकायाश्च ।

**कर्णाटकी**—अथ किम् । परं चैकस्या राजप्रासादेऽपराया स्तूपवनभवने ।

**चन्दः**—अये किमुच्यते ।

**कर्णाटकी**—कवीश्वर पित्रा विवासिता निवसति संप्रति राजकन्या गङ्गातीरोपवनप्रासादे । अस्याश्च संदेशहरोऽयं सखीजनो वाग्देवतावतारं कविकुलेश्वरमत्रभवन्तं स्वागतेनाभिनन्दितुं संप्राप्तः ।

**चन्दः**—तेनातीव खलूपकृतोऽस्मि । अथ श्रावयतु राजपुत्र्याः संदेशं सखीजनः ।

**कर्णाटकी**—कवीश्वर अस्त्येतन्मे प्रियसख्या विज्ञापनम् । यत्

समायान्तं श्रुत्वा कविवरमधीश,प्रणयिनं
भवन्तं साष्टाङ्गं प्रणमति महाराजतनया ।

---

**समायान्तमिति** । अधीशप्रणयिनं पृथ्वीराजमित्रं कविवरं भवन्तमथवा हे अधीश पृथ्वीराज कविवरं रसिकोत्तमं प्रणयिनं भवन्तं समायान्तं श्रुत्वा महाराजतनया संयोगिता साष्टाङ्गं प्रणमति । यतो यस्मान्महेशे शिवे मित्रे सवितरि वाऽथवा महेशे पृथ्वीराजे मित्रे चन्दे वा नतिभाजां तनुभृतां देहिनां

महेशे मित्रे वा भवति नतिभाजां तनुभृतां
यतो मुक्तिर्बन्धादभिमतवरस्याप्यधिगमः ॥ १४ ॥

**पृथ्वीराजः**—(स्वगतम्) अहो मामेवाधिकृत्यायं पदप्रयोगः। प्रिये समुपस्थिता ते मुक्तिः।

**चन्दः**—भवतु राजकन्यायाः पार्थितवरसिद्धिरित्याशास्महे।

**सख्यः**—अनुगृहीताः स्मोऽत्रभवतामाशीर्वचनेन।

**पृथ्वीराजः**—(अपवार्य) आर्य एषाऽस्ति पूर्वपरिचिता कर्णाटकी।

(इति कर्णाटकीमभिमुखीकृत्य निशीथान्त मदागमनं परिपालयेति नेत्रसंकेतेन सूचयति।)

**चन्दः**—(अपवार्य) अथ किम्। इदानीं खल्वेषा परमविस्रम्भभाजनं कनोजाधिपस्य।

**सख्यः**—परिणतो दिवसः। तदर्हति गमनायानुज्ञां दातुं कवीश्वरः।

**चन्दः**—सुखाः सन्तु पन्थानः।

(इति निष्क्रान्तः सखीजनः)

**पृथ्वीराजः**—मित्र ज्ञातमेव प्रत्यर्थिसामर्थ्यम्। अतोऽकारणद्वेषपरस्य तस्य शासनार्थं प्रकटीभवितुमिच्छामि।

**चन्दः**—सार्वभौम साहसप्रतिपत्त्या तु भविष्यत्यत्र कार्योपघातः।

**पृथ्वीराजः**—अभिनन्दितं मित्रवचनम्। (स्वगतम्)

**बन्धात्** संसारबन्धनात् कारागृहाद्वा मुक्तिरपि चाभिमतस्य वरस्य प्रार्थनाया भर्तुर्वाऽधिगमः संप्राप्तिर्भवति। श्लेषालङ्कारः। शिखरिणीवृत्तम्। त्वां प्रणताया मम मुक्तिप्रदो भवेति ध्वनिः। अत्रोपन्यासाख्यो नाटकालङ्कारः—'उपपत्तिमता हेतोरुपन्यासोऽर्थसिद्धये।' इत्युक्तत्वात्।

**परिणत इति**। अत्र कनोजाधिपस्य परिणतो दिवस इति सबन्धयोजनया कनोजाधिपस्य भाविपराभवसूचनात् पताकास्थानमिदम्।

किमिति धावति विह्वलतां गतं
प्रणयसूत्रनिबद्धमिदं मनः ।
प्रियतमाप्रणिपातपुरःसरं
भवतु पूर्वमिहाशु विमुक्तिभाक् ॥ १६ ॥

(प्रकाशम्) तावदश्वमारुह्य भागीरथीतीरे प्रियामन्विष्यामि । (इति द्वारदेशं गत्वाऽश्वमारुह्य) वीर भागीरथीमार्गमादेशय ।

वीरसिंहः—इत इतो देवः ।

(उभौ परिक्रामतः)

देव एषा लोकत्रयपावनी पुण्यजला भागीरथी ।

पृथ्वीराजः—वीर मद्वचनादुच्यतां प्रियवयस्यो यन्नृशंसाराति हस्तगतेन त्वया सावधानेन भवितव्यमिति ।

वीरसिंहः—यद्देव आज्ञापयति ।

(इति निष्क्रान्तः)

पृथ्वीराजः—(प्रणम्य) भगवति भागीरथि प्रसिद्धमेव ते लोकोत्तरं पावनत्वम् । यतः

कल्लोलवीचिरमणीयजलप्रवाहे
मज्जन्ति ये सुकृतिनः किल मुक्तिभाजः ।

---

**किमिति धावतीति** । प्रणय एव सूत्रं तेन निबद्धमिदं विह्वलतां गतं मनः किमिति धावति साहसं प्रतीति शेषः । तन्मनः एवं प्रथममिह प्रियतमाप्रणिपातपुरःसरमाशु विमुक्तिभाग् मुक्तं भवतु । अत्रोद्यमाख्यो नाट्यालङ्कारः- 'कार्यस्यारम्भ उद्यमः' इत्युक्तेः । द्रुतविलम्बितं वृत्तम् ।

**प्रियामन्विष्यामीति** । अत्र पारसर्पाख्यं संध्यङ्गम्—'इष्टनष्टानुसरणं परिसर्पश्च कथ्यते' इत्युक्तेः ।

**कल्लोलेति** । कल्लोला महातरङ्गा वीचयस्तरङ्गास्तै रमणीयश्चासौ जलप्रवाहश्च तस्मिन् ये सुकृतिनो मज्जन्ति स्नानं कुर्वन्ति ते किल मुक्तिभाजो मुक्ता

( सनिःश्वासम् ) तथापि

बाल्यात्तवैव चरणौ शरणं प्रपन्ना
हा मे कथं प्रियतमा समवाप बन्धम् ॥ १५ ॥

मातः नोचितं तवैतावन्नैष्ठुर्यम् । कृतागस्यप्यपत्ये स्निग्धैव जननी । तथा च बाल्यात्प्रभृति त्वयैव संपादितमस्या मातृकृत्यम् । अतः

सन्त्येव तेऽच्छपयसा परिपोषितायां
तस्यां गतं विमलता रसविभ्रमाश्च ।
माधुर्यशैत्यमिति किं न तु कामचारो
मातुर्गुणा हि तनयाऽनुगता भवन्ति ॥ १७ ॥

अहो एवं निरुद्धसंचारा सा प्रकृतिसुकुमारा कदाचिदपहधैर्यतयाऽनिष्टमप्याचरेत् । हा अम्ब

भस्मीकृता ये कपिलेन कोपात्
समुद्धृतास्ते सगरात्मजास्त्वया ।
दग्धां प्रियां मे स्वगुरोरमर्षात्
कर्तुं प्रवृत्तासि कथं नु भस्मसात् ॥ १८ ॥

---

भवन्ति । तथापि बाल्यात्तवैव चरणौ शरणं प्रपन्ना गता मे प्रियतमा कथं बन्धं समवाप प्राप्नोत् ।

**सन्त्येवेति** । बाल्य एव संयोगिताया मातुरवसानात्ते तवाच्छेन निर्मलेन पयसा जलेन स्तन्येन वा परिपोषितायां तस्यां गतं विमलता रसविभ्रमौ माधुर्यशैत्यं चेति सर्वे त्वदाश्रया गुणाः सन्ति । तु कामचारः किं कथं नास्ति । मातुर्गुणास्तनयानुगता भवन्ति हि इति प्रसिद्धमित्यर्थः । वसन्ततिलकावृत्तम् ।

**भस्मीकृता इति** । कपिलेन महर्षिणा कोपात् ये सगरात्मजा भस्मीकृतास्ते त्वया समुद्धृताः । स्वगुरोर्जयचन्द्रस्य कोपदग्धा मे प्रिया संयोगितां कथं नु भस्मसात्कर्तुं प्रवृत्ताऽसि । उपजातिवृत्तम् ।

(परिक्रम्य) अहो कथमद्यापि नैवोपयाति दृष्टिपथं प्रियतमा-पदाङ्कितोपवनसरणिः । (दीर्घं निश्वस्य) हा संप्रति

ललितविभवैर्बाल्ये बाला तु यैरुपलालिता
गुरुभिरथ तै नैष्ठुर्येण स्वयं परितापिता ।
हिमकरहता शुष्यन्ती सा वने नवमल्लिका
हृदयरमणी क्वाऽन्वेष्टव्या प्रिया चिरदुःखिता ॥ १९ ॥

(दूरं विलोक्य) किमेतद्दीपप्रभामाण्डितं राजमन्दिरमिव पुरतो दृश्यते । यावत्तत्रैव गच्छामि ।

(इति निष्क्रान्तः)

समाप्तोऽयं प्रच्छन्नसंचारनामा चतुर्थोऽङ्कः ।

---

**ललितविभवैरिति** । यैर्गुरुभिर्बाल्ये ललितविभवैर्बालोपलालिता तैरथानन्तरं नैष्ठुर्येण स्वयं परितापिता वियोगेनेति शेषः । हिमस्य करैः कर-कैर्हताऽत एव शुष्यन्ती नवमल्लिकारूपा सा चिरदुःखिता हृदयरमणी प्रिया क्वान्वेष्टव्या । हरिणीवृत्तम् ।

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्या[illegible] प्रच्छन्नसंचारनामा चतुर्थोऽङ्कः समाप्तः ।



अथ

# पञ्चमोऽङ्कः ।

( ततः प्रविशत्युपर्यलिन्दमारूढा सखीद्वितीया संयोगिता )

**कर्णाटकी**—अयि तावत्तन्त्रीवादनेन विनोदयात्मानम् ।

**संयोगिता**—सखि देहि मे विरहसहायां वल्लकीम् ।

**कर्णाटकी**—तथा

(इति वीणामर्पयति)

**संयोगिता**— (वीणामादाय गायति )

( गौण्डमल्लाररागेण त्रितालेन गीयते )

क्व नु मम विहरसि मानसहंस ॥

घन इव सततं वर्षति नयनम् ।

स्फुटयति तडिदिव रतिरिह हृदयम् ॥ क्व नु० ॥१॥

तिरयति तिमिरं तव पन्थानम् ।

अयि कुरु मरुतं प्रिय तव यानम् ॥ क्व नु० ॥२॥

विरहविलुलितां परमाकुलिताम् ।

प्रियमुखनिरतामव तव दयिताम् ॥ क्व नु० ॥३॥

हा नाथ क्वासि—

(इति मूर्च्छति)

---

**पञ्चमोऽङ्क इति** । अयमप्यङ्कावतारः ।

**गौण्डमल्लारेति** । तल्लक्षणं लक्ष्यसंगीते—‘ खंमाजीमेलके ख्यातो गौण्डमल्लारनामकः ॥ संपूर्णोऽयं मध्यमांशो गीयते लक्ष्यवर्त्मनि । आरोहणे निदुर्बलो वर्षासु सुखदायकः ॥ गन्योरत्र परित्यागाच्छुद्धमल्लारसंभवः । मध्यमादृषभे पातो विशिष्टां रक्तिमावहेत् ॥ ’ इति ।

**क्व न्विति** । मानसमेव मानसं सरस्तस्मिन्हंस इव तत्संबुद्धौ हे मानसहंस क्व नु विहरसि । घनो मेघ इव सततं नयनं वर्षत्यविच्छिन्नधारयाऽश्रूणि मुञ्चतीत्यर्थः । रतिस्त्वय्यनुरागस्तांडदिव विद्युदिव हृदयं स्फुटयति भिनत्ति । तिमिरमन्धकारं

**कर्णाटकी**—सखि समाश्वसिहि समाश्वसिहि । अयि पश्यैता-स्तव गीतप्रकर्षोद्भवाः कालिन्दीनिभा मेघततय इत एवाभिवर्तन्ते ।

**संयोगिता**—( संज्ञां लब्ध्वा ) अहो कालिन्दीशब्देन खलु वञ्चिता-हम् । यतः

तरङ्गभङ्ग्याकुलमानसाया
न मे प्रिया जह्नुसुतातरङ्गाः ।
कलिन्दनन्दिन्यवगाहनन्दो
मथ्नात्यजस्रं विकलं मनो मे ॥ ९ ॥

**कर्णाटकी**—( सस्मितम् ) अभिलङ्घति भागीरथीतटमिदानीं तु तव मन्मथः ।

**संयोगिता**—( सभ्रूभङ्गम् ) किमेवं मां परिहससि मिथ्याप्रलापैः ।

**कर्णाटकी**—अयि नायं परिहासः किंतु परमार्थः ।

**संयोगिता**—यद्येवं तर्हि कथय कुतस्तवेयमुपलब्धिः ।

**कर्णाटकी**—कवीश्वराभिनन्दनमिषेण तन्निवेशमुपगतायाः सूचितं मेऽधीश्वरेण निशीथान्ते मदुपागमनं भविष्यतीति ।

---

तव पन्थानं तिरयति दृग्गोचरतां नयति । तदयि प्रिय मरुतं दाक्षिणानिलं तव यानं कुरु । विरहेण विलुलितां कम्पितां परममाकुलितां प्रियस्य मुखे निरतां त्वद्ध्याऽनैकपरमामित्यर्थः । तव दयितां प्रणयिनीमव रक्ष । वर्षागमे राजहंसा मानसमाश्रयन्त इति प्रसिद्धिः । इत आरभ्य विप्रलम्भशृङ्गारो रसः ।

**गीतप्रकर्षेति** । मल्लाररागप्रभावेण कालेऽपि मेघो वर्षतीति लोकवादः ।

**तरङ्गेति** । तरङ्गाणां मनसः सरितश्च भङ्ग्या मालयाकुलं मानसं यस्यास्तस्या मे मम जह्नुसुताया गङ्गायास्तरङ्गाः प्रिया न सन्तीत्यर्थः । कलिन्दस्य तदाख्यस्य गिरेर्नन्दिनी कन्या यमुना तस्यामवगाहेन नन्दति स पृथ्वीराजोऽजस्रं सततं मे विकलं मनो मथ्नाति । उपजातिवृत्तम् ।

**तव मन्मथ इति** । अत्र नर्माख्यं संध्यङ्गम्-'परिहासवचो नर्म' इत्युक्तेः ।

**संयोगिता**–( स्वगतम् ) हृदय संप्रति नातिदूरं वर्तते ते प्रार्थनाविषयः । ( प्रकाशम् ) सखि पश्यैनं वियन्मध्यवर्तिनं भगवन्तं कुमुदिनीनायकम् ।

**कर्णाटकी**–अहो निशीथकल्पा हि रजनी । तदत्रैवाधीश्वरस्यागमनं परिपालयावः ।

**संयोगिता**–( स्वगतम् ) कथमद्यापि न श्रद्दधाति विरहकातरं मे हृदयम् । ( प्रकाशम् ) अपि त्वया सुगृहीतः संकेतः ।

**कर्णाटकी**–सखि नास्त्यत्र शंकावसरः । यदसौ

अनुचरपदमप्युपेत्य सम्राड्
निवसति भीरु तवेह संगमोत्कः ।
निजकररुचिरां करिष्यति त्वां
हिमकरवच्च तमस्विनीं प्रसन्नाम् ॥ २ ॥

**संयोगिता**–( सनिःश्वासम् ) अयि अतीतः खलु संकेतकालः ।

**कर्णाटकी**–सखि अपरिचितप्रदेशसंक्रमणे तु भवत्येव संकेतव्यत्ययः ।

**संयोगिता**–( सावेगम् ) आवां तावत्प्रतिष्ठावहे तमन्वेष्टुम् । यतः

---

**अनुचरेति** । हे भीरु तव संगमोत्कः सम्राडनुचरपदमप्युपेत्येह निवसति । स च त्वां तमस्विनीं तमोगुणाभिभूतां रात्रीं वा हिमकरवत् चन्द्रवत् निजैः करैः किरणैः रुचिरां द्योतमानां पक्षे निजकरेण स्वहस्तेन यत्तव पाणिग्रहणं तेन रुचिरां विराजमानां निजकररुचिरामत एव प्रसन्नां करिष्यति । पुष्पिताग्रावृत्तम् ।

**अयि अतीत इति** । अत्र विमर्शसंध्यारम्भः । तदुक्तं दर्पणे–' यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ॥' इति ।

प्रियतममुपलभ्य संनिकृष्टं
न हि हृदयं सखि विन्दते धृतिं मे ।
मृगसलिलनितान्तपीडितः किं
त्वरितमुपैति समीक्ष्य नोदपानम् ॥ ३ ॥

**कर्णाटकी**—अयि क्षणं तावद्धैर्यावष्टम्भं कुरु । यावत् सकलसंशयोच्छेदि भवेत्तव प्रियसंनिधानम् ।

**संयोगिता**—एवं परिणतपरितापास्तु बहवो मे व्यतीताः क्षणाः । तदधुना

व्याहारे ते दूतिकायाश्च सूक्तौ
स्निग्धे तस्मिंश्चाटुवादे प्रियस्य ।
सद्यो हित्वाप्यालि विश्वासयोगं
निष्ठाशून्यं भ्राम्यतीदं मनो मे ॥ ४ ॥

अयि पश्यैष दिल्लीश्वरोऽपि
संप्राप्याहं कथमपि रहः सान्त्वयिष्ये प्रिये त्वा-
मित्येवं मां वचननिपुणः किं प्रतिश्रुत्य कान्तः ।

---

**प्रियतममिति** । हे सखि प्रियतमं पृथ्वीराजं संनिकृष्टं समीपमुपलभ्य प्राप्य मे हृदयं धृतिं न विन्दते धैर्यं नावलम्बत इत्यर्थः । मृगसलिलेन मृगतृष्णिकया नितान्तमत्यन्तं पीडितं उदपानं जलाशयं समीक्ष्य त्वरितं नोपैति किम् । अपि तूपैतीत्यर्थः । अतस्तमन्वेष्टुं प्रतिष्ठावह इति पूर्वेण संबन्धः । अत्रौत्सुक्याख्यो व्यभिचारिभावः । पुष्पिताग्रावृत्तम् ।

**व्याहार इति** । हे आलि इदं मे मनसो व्याहारे वचने दूतिकाया मदनिकायाश्च सूक्तौ तस्मिन् प्रियस्य पृथ्वीराजस्य च स्निग्धे चाटुवादे—'अयमागतः प्रिये तव०'—इति प्रियवचसि सद्यो विश्वासयोगं हित्वा त्यक्त्वा निष्ठाशून्यं निरालम्बं भ्राम्यति । शालिनीवृत्तम् ।

**संप्राप्येति** । अहं रहः कथमपि महता प्रयत्नेन समागत्य हे प्रिय त्वां सान्त्वयिष्य इति वचननिपुणः कान्तो मामेव प्रतिश्रुत्य—मदनिकाद्वारेत्यनुसन्धेयम्—

नैवायातो गमयति न वा किं स्वकीयां प्रवृत्ति-
　　माशाबन्धप्रधृतहृदयं हाऽवलम्बं जहाति ॥ ५ ॥

(इति मूर्च्छति)

**कर्णाटकी**—सखि समाश्वसिहि समाश्वसिहि ।

**संयोगिता**—(संज्ञां लब्ध्वा) अयि
यश्चेतनां जडयति श्लथयत्यथाङ्गं
　　दृष्टिं करोति सहसा तमसाऽभिभूताम् ।
मथ्नाति यश्च विरहव्यथितं मनो मे
　　कोऽयं पुनः समुदितः प्रबलो विकारः ॥ ६ ॥

**कर्णाटकी**—( स्वगतम् ) अहो कष्टां दशां प्रापितेयं मदनहतकेन। ( प्रकाशम् ) प्रियसखि त्वं तावत्क्षणं शय्यामारुह्य विनोदय प्रजागरविक्लवमात्मानम् ।

**संयोगिता**—सखि न मे उन्निद्रायाः कुसुमशय्यापि संतापं शमयति । यावत्प्रासादपृष्ठे कौमुद्यामात्मानं विनोदयामि । (इति सख्या सहारोहति)

( आरुह्य वातस्पर्शमभिनीय ) अहो दक्षिणानिल त्वमेक एव सर्वत्र सुलभसंचारः। तन्मन्दभाग्याया शृणु मेऽभ्यर्थनाम् ।

---

**नैवायातो** न वा स्वकीयां प्रवृत्तिं वार्तां गमयति ज्ञापयति । हा इति खेदे आशाबन्धेन प्रधृतं हृदयमवलम्बं जहाति धैर्यं मुञ्चतीत्यर्थः । अत्र विरहोत्कण्ठिता-नायिका । तदुक्तं दर्पणे-‘ आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः । तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥ ’ इति । मन्दाक्रान्तावृत्तम् ।

**यश्चेतनामिति** । अयि कोऽयं पुनः प्रबलो विकारः समुदितः संजातो यश्चेतनां जडयत्यथ चाङ्गं शरीरं श्लथयति दृष्टिं च सहसा तमसाऽन्धकारेणाभिभूतां करोति यश्च विरहेण व्यथितं पीडितं मे मनो मथ्नाति । वसन्ततिलकावृत्तम् ।

मन्दस्त्वं बहुवल्लभोऽप्यविरतं दूरादुपेत्य प्रियाः
स्नेहान्नन्दयसीत्थमामुकुलिता एकान्तभोगी लताः।
अद्य त्वं कुरु बन्धुकृत्यमिति मे प्राणेश्वरं संदिशन्
नाथे त्वय्यपि सीदति प्रणयिनी तत्किं तवात्रोचितम्॥७॥

**कर्णाटकी**–(स्वगतम्) नितान्तमाक्रान्तेयं कुसुमसायकेना-तश्छन्दानुरोधेनैवात्र प्रतिपत्तिरुचिता। (प्रकाशम्) अयि सकृत्प्रार्थि-तोऽपि जात एव ते संदेशहरोऽयं दक्षिणानिलः।

**संयोगिता**–अत एवापादितोऽयं स्वसहायतां तत्सौजन्यतुष्टेन वसन्तसखेन.

**कर्णाटकी**–अथ किम्।

**संयोगिता**–(निश्वस्य) अपि तातापकृत्यादसौ विनिवृत्तो भवेत्। (ऊर्ध्वं विलोक्य) अयि रजनीरमण

रे मां कथं व्यथयसि क्षपिताङ्गयष्टिं
ज्योत्स्नान्तरे कुमुदिनीश कुरु प्रलीनाम्।

---

**मन्दस्त्वमिति**। त्वं मन्दोऽपि बहुवल्लभोऽपि दूरादविरतं सततमुपेत्ये-त्थमामुकुलिताः प्रिया लतारूपा एकान्तभोगी सन्नन्दयसि। अतस्त्वं–'त्वयि नाथे सत्यपि ते प्रणयिनी सीदति तत्किं तवात्रोचितमस्ति'–इति **प्राणेश्वरं संदिशन्नद्य** मे मम बन्धुकृत्यं कुरु। अत्रोन्मादाख्य सप्तमी कामदशा। तदुक्तं दर्पणे–'उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि। अलक्ष्यवाक्प्रलापः स्याच्चे-तसो भ्रमणाद् भृशम्॥' इति। शार्दूलविक्रीडितं वृत्तम्।

**अपि तातापकृत्यादिति**। अत्र शङ्काख्य संध्यङ्गम्–'परकीयात्मदोषाद्यैः शङ्काऽनर्थस्य तर्कणम्।' इति।

**रे मां कथमिति**। हे कुमुदिनीश चन्द्र क्षपिता क्षयं प्रापिता अङ्गं यष्टिरिवाङ्गयष्टिर्यस्यास्तां कथं व्यथयसि। त्वं मां ज्योत्स्नान्तरे कौमुदीमध्ये प्रलीनां कुरु। अतो भाग्यवशात् प्रासादपृष्ठे ज्योत्स्नारूपेण चरन्ती प्राणेश्वरस्य पृथ्वीराजस्य प्रणयपात्रं भवेयम्। वसन्ततिलकावृत्तम्।

प्रासादपृष्ठमपि भाग्यवशाच्चरन्ती
प्राणेश्वरप्रणयपात्रमतो भवेयम् ॥ ८ ॥

**कर्णाटकी**—प्रियसखि न युक्तं मिथ्यातर्केणैवमात्मानमवसादयितुम् । यतः

त्वामात्मनः प्रियतमामपहाय सम्राड्
देशान्तरप्रवसनाभिरुचिः कथं स्यात् ।
त्यक्ता श्रुता किमयि वारिधरेण पूर्वं
विद्युल्लता निजरसाश्रयिणी कदाचित् ॥ ९ ॥

**संयोगिता**—न मां समादधाति ते मधुरोक्तयः । तच्छृणु मे चरमामभ्यर्थनाम् ।

कथमपि बलादेवंप्रायं धृतं हतजीवितं
सखि परमतो जाने नाहं भविष्यति तस्य किम् ।
विरहविकलं यावद्देहं न मुञ्चति मारुतो
हृदयरमणं स्निग्धे तावत्तमानय मेऽन्तिकम् ॥ १० ॥

( नेपथ्ये पदसञ्चारध्वनिः )

( आकर्ण्य ससंभ्रमम् ) अयि पुरस्तात्पदक्रम इवोपश्रूयते । यावदवलोकयावः ।

( इति मन्दं परिक्रामतः )

---

**त्वामात्मन इति** । आत्मनः प्रियतमां त्वामपहाय त्यक्त्वा सम्राडन्यो देशो देशान्तरं तत्र प्रवसने प्रवासेऽभिरुचिर्यस्य तादृशः कथं स्यात् । अयि वारिधरेण मेघेन निजो यो रसो जलमाश्रयोऽस्या सा विद्युल्लता कदाचित् पूर्वं त्यक्ता श्रुता किम् । अत्रापि जलधरच्छद्मा पृथ्वीराजो विद्युल्लतारूपां निजो रसः प्रेम तदाश्रयिणीं त्वा त्यक्त्वा देशान्तरं न हि गच्छेदिति श्लेषेण सूच्यते । अत्र दृष्टान्तालङ्कारः । वसन्ततिलकावृत्तम् ।

**कथमपीति** । हे सखि मया कथमपि बलादेवंप्रायं प्रायेणतादृशं हतजीवितं धृतम् । अतः परं तस्य जीवितस्य किं भविष्यति तदहं न जाने । हे स्निग्धे मारुतः प्राणाख्यो विरहविकलं देहं यावन्न मुञ्चति तावत्तं हृदयरमणं मे ममान्तिकं समीपमानय । हरिणीवृत्तम् ।

( ततः प्रविशत्यश्वारूढः पृथ्वीराजः )

**पृथ्वीराजः**—( पुरो विलोक्य स्वगतम् ) अहो एष तु राजकुलावासयोग्यः प्रासादः । ( अश्वादवतीर्य परिक्रम्य च ) श्रुतं हि मया चारमुखेन यदत्रकुत्रचिदवरुद्धा तिष्ठति मे प्राणेश्वरी । कदाचिदत्रैव सोपलभ्येत । ( पुनः परिक्रम्य ) अहो समन्ततः पिहितान्येव द्वाराणि । गाढनिद्राक्रान्तश्च लक्ष्यते रक्षकगणः ।

**संयोगिता**—( वामाक्षिस्पन्दनं सूचयित्वा स्वगतम् ) अहो सर्वथा परिद्यूनेऽपि मनसि कोऽयमकाण्ड एवोत्सवः ।

**पृथ्वीराजः**—( ऊर्ध्वं विलोक्य ) अहो निशीथेऽपि केयमुपरिस्थिता दृश्यते ।

किं स्यादेषा हिमकरकला चञ्चलत्वं कुतोऽस्या
विद्युल्लेखा वियति विमले नाऽपि सभाव्यते वै ।
मन्ये त्वेवं मनसिजरुजा तप्तगात्री प्रिया मे
प्रासादेऽस्मिन्विरहविकला संचरत्येव तन्वी ॥ ११ ॥

**संयोगिता**—( अधो विलोक्य परिक्रम्य च ) इत इतः प्रियसखि ।

**पृथ्वीराजः**—( साश्चर्यम् ) अहो निश्चयमेकपदे
प्रसादयन्ती नयने कृशाङ्गी
क्व विच्युता लोचनकौमुदी मे ।

**किं स्यादिति** । किमेषा हिमकरकला स्यात् । अस्याश्चञ्चलत्वं कुतः संभवति । किमेषा विद्युल्लेखा स्यात् । विमले मेघरहिते वियत्याकाशे वै निश्चयेन सापि न सभाव्यते । अतस्त्वहं विरहविकला मनसिजरुजा तप्तगात्री मे तन्वी प्रियाऽस्मिन्प्रासादे सचरत्येवेवं मन्ये । अत्र निश्चयालङ्कारः । मन्दाक्रान्तावृत्तम् । इत आरभ्य संभोगशृङ्गारः । तदुक्तं दर्पणे—‘ दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योऽन्यं संभोगोऽयमुदाहृतः ॥ ’ इति ।

**प्रसादयन्तीति** । नयने प्रसादयन्ती मे लोचनयोः कौमुदी कृशाङ्गी क्व विच्युता गता । हन्तेति हर्षे दिष्ट्या सखी द्वितीया यस्याः सा उपरि विस्फुरन्ती द्योतमाना पुनः समागता । उपजातिवृत्तम् ।

(सहर्षम्)

दिष्ट्या पुनर्हन्त समागतेयं

सखिद्वितीयोपरि विस्फुरन्ती ॥ १२ ॥

**कर्णाटकी**—अयि त्वत्पदानुगाऽत्रैवाभिवृत्तास्मि । (अधो विलोक्य) एष तु साक्षाद् देव एव ।

**संयोगिता**—हन्त भो उज्जीविता ते सहचरी ।

**कर्णाटकी**—सखि तिष्ठ । यावत्तमर्धीश्वरमानयामि ।

(इति सोपानमार्गमवतरति)

**पृथ्वीराजः**—(प्रकाशम्) अये कथं कर्णाटकी । सा त्वित एवाभिवर्तते ।

**संयोगिता**—(स्वगतम्) अहो मम पुनः

सकृत्प्रियस्यैवमकाण्डदर्शनं

निर्वापयत्यात्ययिकीं मनोरुजम् ।

मन्ये नितान्तं भुवि सैव धन्या

स्वप्नेऽपि यस्या न हि विप्रलम्भः ॥ १३ ॥

**कर्णाटकी**—(प्रासादपृष्ठतोऽवतीर्य शनैश्च द्वारमपावृत्य) देव तूष्णीं मामनुसर ।

(इति सोपानमारोहयति)

**कर्णाटकी**—(आरुह्य) अधीश्वर एषा मे प्रियसखी भवन्तमेव प्रतिपालयन्ती तिष्ठति ।

**संयोगिता**—(ससंभ्रमलज्जम्) स्वागतं दिल्लीश्वरस्य ।

(इत्यधोमुखी तिष्ठति)

---

**सकृदिति** । प्रियस्यैवं सकृदकाण्डदर्शनमात्ययिकीं प्राणान्तिकां मनोरुजं निर्वापयति शमयति । यस्याः स्वप्नेऽपि विप्रलम्भः प्रियवियोगो न हि वर्तते सैव भुवि नितान्तं धन्येति मन्ये ।

**पृथ्वीराजः**—राजपुत्रि अलमुपचारैः ।

(निपुणं निर्वर्ण्य)

प्रतप्यमानावयवा किलैव-
मुपेक्षिता मूढधिया मया त्वम् ।
नैष्ठुर्यमेतत्कृपया क्षमस्व
वितीर्य मे प्रेमभरं कटाक्षम् ॥ १४ ॥

**संयोगिता**—(सलज्जम्) नार्हत्येवमात्मानमधिक्षेप्तुं लोकनाथः । ममैव मन्दभाग्यादीदृशीमवस्थामापन्नाहं पुनरुज्जीविता प्रियदर्शनेन ।

कथमपि विधृतं मनोनुरागा-
त्त्वयि मम जीवितमन्तमभ्युपेतम् ।
तव वदनविलोकनोत्सवेन
स्वयमपि तन्नवतां पुनः प्रयातम् ॥ १५ ॥

( नेपथ्याभिमुखमवलोक्य )

अयि वसन्तिके समानय सत्कारसंभारान् ।

**पृथ्वीराजः**—कृशाङ्गि अलमायासेन ।

प्रेमाकुलापाङ्गविलोकनेन
मनोज्ञया कोमलया गिरा च ।
चिरप्रमत्तोऽप्यनुकम्पया पुनः
सुसत्कृतोऽयं प्रणयी जनस्ते ॥ १[illegible] ॥

( प्रविश्य )

**वासन्तिका**—यथाज्ञापयति भर्तृदारिका ।

---

**प्रतप्यमानेति** । अत्र प्रार्थनाख्य संध्यङ्गम् ' रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत् । ' इति ।

**कथमपीति** । अन्तमभ्युपेतं विनाशोन्मुखं मम जीवितं त्वयि मनोऽनुरागात् कथमपि बलाद्विधृतम् । तव वदनविलोकनमेवोत्सवस्तेन पुनस्तत्स्वयमपि नवता प्रयातम् । पुष्पिताग्रावृत्तम् ।

( इति विवाहसंभारान्समर्प्य निष्क्रामति )

**संयोगिता**—( सविस्मयम् ) हला कर्णाटकि किमिदमुपनतिम् ।

**कर्णाटकी**—सखि अत्र त्वेषैव सत्क्रिया । अलंकुरुतां प्रियसख्यधीश्वरश्चेदं वरासनम् ।

( इति तावत्प्रवेशं कृत्वा हस्तयोश्चोभयोर्विवाहसूत्रं बध्नाति )

**कर्णाटकी**—( विवाहकङ्कणैः संयोगितामलङ्कृत्य ) सखि अर्पयैनां वरमालामधीश्वराय । ( इति मालामर्पयति नेपथ्ये वीणावादनम् )

**संयोगिता**—( सलज्जास्मितम् ) भगवन् कुसुमायुध

प्रागेव यत्र प्रणयप्रवृत्तं
मनः श्रितं पुण्यगुणानुबन्धम् ।
पुरो लसन्तं हृदयाधिवासं
सर्वात्मना तं समुपाश्रयेऽहम् ॥ १७ ॥

(इति वरस्रजमारोपयति)

**पृथ्वीराजः**—(स्वगतम्) दिष्ट्या खल्वहमद्य स्त्रीरत्नयोगेनाखण्डैश्वर्यभाक् संवृत्तः । ( प्रकाशम् ) प्रिये स्वीकृत्येमामङ्गुलीमुद्रामनुगृहाण ते स्वजनम् ।

( इत्यर्पयति )

**संयोगिता**—भवतु सर्वदा मे हृदयसंनिहिता मुक्तावलिमध्यमणिपदमलङ्कुर्वाणैषा प्रियमुद्रा ।

( इति मुक्तावल्या योजयति )

स्निग्धे अद्य खलु सनाथा संवृत्ता ते प्रियसखी ।

**कर्णाटकी**—महानेषोऽनुग्रहः शरणोन्मुखानां शरण्यस्य दिल्लीश्वरस्य । अयि तिष्ठ तावन्मुहूर्तम् । यावदानयाम्यन्तर्गृहान्मधुपूर्णं चषकम् ।

(इति निष्क्रान्ता)

**पृथ्वीराजः**—अयि जीवितेश्वरि अत्र तु त्वमेव मे शरण्या । यतः

मनसिजविशिखाहत प्रिये मां
पुनरपि जीवयसि त्वमीक्षणाभ्याम् ।
हिमकरकरतापितान्तरङ्गं
सुखयासि चेन्दुमुखि स्वयं कराभ्याम् ॥ १८ ॥

( इति चुम्बितुमिच्छति )

**संयोगिता**—नाथ रक्ष विनयम् । ( इति वारयति ) एषा प्रत्युपागता चषकहस्ता मे प्रियसखी ।

(प्रविश्य)

**कर्णाटकी**—अयि निवेदय ते हृदयाधीश्वरायेदं श्रमविनोदक्षमं चषकम् । ( इति सधूर्ण सुवर्णचषकमर्पयति )

**संयोगिता**—( आदाय सलज्जम् ) अङ्गीकरोत्वार्यपुत्रः ।

( इति अर्पयति )

**पृथ्वीराजः**—प्रिये

आप्यायितस्ते नवपल्लवाधर-
श्रितेन पीयूषरसन कामिनि ।
कथं भवेयं मधुपानलालसः
किमाप्तकामस्य हि दृश्यते स्पृहा ॥ १९ ॥

---

**मनसिजेति** । हे प्रिये मनसिजस्य विशिखैराहतं हतप्रायं मां त्वमीक्षणाभ्यां स्निग्धदृष्टिपातेन जीवयसि । च हे इन्दुमुखि हिमकरस्य चन्द्रस्य करैः किरणैस्तापितमन्तरङ्गं मनो यस्य तं स्वयं कराभ्यां वरमालारोपणनिमित-करस्पर्शेन सुखयसि । पुष्पिताग्रावृत्तम् ।

**आप्यायित इति** । हे कामिनि ते तव नवश्चासौ पल्लवश्च स इवाधरस्तं श्रितेन पीयूषरसनामृतरसेनाप्यायितः परितर्पितो मधुपाने लालसा स्पृहा यस्य तादृशः कथं भवेयम् । हि यत आप्तकामस्य स्पृहा दृश्यते किम् । न दृश्यत इत्यर्थः । अत्रार्थान्तरन्यासोऽलङ्कारः । उपजातिवृत्तम् ।

अथवा

नवं मृगाङ्कप्रतिमाङ्कशीतलं
प्रियाङ्गुलीस्पर्शगुणान्वितं मधु ।
स्मितेन चैवं प्रणयप्रसारितं
प्रकाममास्वादयतीह धन्यः ॥ २० ॥

तत्सानन्दं स्वीकरोमि । ( इत्यादि पीत्वा तावशेषं चषकं संयोगितायै समर्पयति )

**संयोगिता**—( निपीय ) अहो मे सौभाग्यम् । यतः

दूरादुपेत्यालि मदन्तिकं स्वयं
संतर्प्य चैवं मधुरोक्तिभिः प्रियः ।
करिष्यतीत्थं मधुपानभागिनीं
स्वप्नेऽपि नासीन्मम सा प्रतीतिः ॥ २१ ॥

**कर्णाटकी**—( स्वगतम् ) अहो परस्परानुरागद्रवीभूतान् घटयतोऽनङ्गस्य कृतकृत्यता । ( प्रकाशम् ) सखि एतां ताम्बूलवीटिं ते वल्लभाय समर्पय ।

**संयोगिता**—( तथा कृत्वा ) स्निग्ध त्वमेवासि मम सौभाग्यदेवता । तद् गृहाणैनां मुक्तावलिं मया प्रेम्णोपहारीकृताम् ।

---

**नवमिति** । मृगाङ्कस्य चन्द्रस्य प्रतिमा प्रतिबिम्बस्याङ्कश्चिह्नं यस्मिंस्तच्च शीतलं च प्रियाया अङ्गुलीनां स्पर्श एव गुणस्तेनान्वितं युक्तं स्मितेन चैवं प्रणयेन प्रसारितं नवं मधु इह भुवि धन्यः प्रकामं यथेष्टमास्वादयति । वंशस्थवृत्तम् ॥

**तद् गृहाणेति** । अत्र मुक्तावलीसमर्पणेनैकान्तसमागमाभिलाषस्य प्रदर्शितत्वान्मनोरथाख्यं लक्षणम् । 'मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ।' इत्युक्तत्वात् ।

**कर्णाटकी**–( सस्मितमादाय ) अधीश्वर एतच्छयनगृहम् । तद्विश्राम्यतु चिरप्रवासजनितश्रमविनोदार्थम् । सखि त्वमपि तावदाह्लादय वीणागानेनाधीश्वरम् ।

**संयोगिता**–इत इत आर्यपुत्रः। ( इति पृथ्वीराजेन सह निष्क्रान्ता )

**कर्णाटकी**–दिष्ट्याद्य संपन्नं मे पूर्वभर्तुः प्रियसख्याश्चाभीप्सिततमम्। यतः

अनन्यभावेन सखी प्रपन्ना-
मधीश्वरं तुल्यगुणानुरागम् ।
संयोज्य तां संप्रति तेन भर्त्रा
ममान्तरात्मा परितृप्तिमेति ॥ २२ ॥

( ऊर्ध्वं विलोक्य ) अहो अतीतप्राया हि रजनी । यावदहमपि शयनमारोहामि ।

( इति निष्क्रान्ता )

समाप्तोऽयं प्रियसमागमनामा पञ्चमोऽङ्कः ।

---

**अनन्यभावेनेति** । तुल्यौ गुणानुरागौ यस्य तमधीश्वरमनन्यभावेन प्रपन्नां प्राप्तां तां सखीं संप्रति तेन भर्त्रा संयोज्य ममान्तरात्मा चेतः परितृप्तिमेति । उपजातिवृत्तम् ।

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्योतन्यां प्रियसमागमनामा पञ्चमोऽङ्कः समाप्तः ।



अथ

# षष्ठोऽङ्कः

( ततः प्रविशति लवङ्गिका मालिनी च )

**मालिनी**—अहो लवङ्गिके । (परितो विलोक्य) क्व गता रक्षपालाः ।

**लवङ्गिका**—अये किमनभिज्ञेव मां पृच्छसि ।

**मालिनी**—प्रातरुत्थाय ग्रामान्तरं प्रस्थिताऽहं किमपि न जाने ।

**लवङ्गिका**—अयि जातमभीष्टं भर्तृदारिकायाः ।

**मालिनी**—अप्यभिनन्दितोऽस्या मनोरथो महाराजेन ।

**लवङ्गिका**—असंभाव्यमेवैतत् । किंतु समागतोऽत्र सम्राट् पृथ्वीपतिः ।

**मालिनी**—( ससंभ्रमम् ) अरे किं ब्रवीषि ।

**लवङ्गिका**—प्रच्छन्नं प्रविष्टेन तेन संगताऽस्मद्भर्तृदारिका । ततश्च किलकिलाध्वनिमुपश्रुत्य प्रयाणाभिमुखेन तेनैकाकिना निहताः सर्वेऽप्यवरोधकारिणो रक्षपालाः ।

**मालिनी**—( ससाध्वसम् ) तत्का गतिरस्माकमत्र निर्जने प्रदेशे ।

**लवङ्गिका**—मूढे समाश्वसिहि । स एवास्माकं रक्षिता ।

**मालिनी**—सत्वितः प्रयात इति त्वयैव भणितम् ।

**लवङ्गिका**—परंतु प्रणयसूत्रग्रथितस्य तस्य महानुभावस्य पुनरागमनं प्रतीक्ष्यते ।

**मालिनी**—क्व पुनरस्मद्भर्तृदारिका ।

**लवङ्गिका**—( उपरि निर्दिश्य ) अयि पश्य । उपर्यलिन्दस्थितैषा सखीद्वितीयाऽस्मद्भर्तृदारिकाऽपि तमेव प्रतिपालयति । यावत्तत्रैव गच्छावः । (इति निष्क्रान्ते)

**इति प्रवेशकः ।**

---

**प्रवेशक इति** । तल्लक्षणमुक्तं दर्पणे-' प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ' इति ।

( ततः प्रविशति यथानिर्दिष्टा संयोगिता )

**संयोगिता**—कथमद्यापि नोपतिष्ठत्यार्यपुत्रः । अयि

वाते निश्चलतां गते सविहगं जातं वनं निःस्वनं
सोऽयं चापि विराजते कुमुदिनीकान्तो विमन्मध्यगः ।
नैराश्यं समुपश्रितो निजजनः स्वापाकुलो मन्थरो
मुक्ताहारमणिर्न किं तदपि मे हृद्देशमाश्लिष्यति ॥१॥

**कर्णाटकी**—प्रियसखि न हि स्वच्छन्दविहारिणो लोकनाथाः । तथा च

कथं स सम्राड् रिपुवाहिनीवृत-
स्त्वाविर्भवेत्ते नियमेन सन्निधौ ।
न वै स्वयं प्रावृषि मेघसंवृतः
स्फुटं सदा तिग्मरुचिः प्रकाशते ॥ २ ॥

**संयोगिता**—स्निग्धे प्रियसमागमसुखरसास्वादविदुरं तु मे हृदयमतितरां विरहासहिष्णु संवृत्तम् । यतः

यस्या मे प्रियसंगमे क्षण इव स्निग्धे त्रियामा गता
सैवाहं क्षपितुं क्षणं विरहिणी नैवास्म्यलं विक्लवा ।

**कथं स इति** । रिपोर्वाहिनी सेना तया वृत आवृतस्तु स सम्राट् राजस्ते तव सन्निधौ कथं नियमेन संकेतानुसारेणाविर्भवेत् । प्रावृषि वर्षागमे मेघैः संवृतस्तिग्मरुचिः सूर्यः सदा वै निश्चयेन स्वयं स्फुटं न प्रकाशते । अत्र दृष्टान्तालङ्कारः । उपजातिवृत्तम् ।

**यस्या म इति** । हे स्निग्धे यस्या मे प्रियस्य पृथ्वीराजस्य संगमे त्रियामा रात्रिः क्षण इव गता सैवाहं विरहिणी तेन वियुक्ताऽत एव विक्लवा दुःखिता क्षणं क्षपितुं नैवालं समर्थाऽस्मि । हे आलि मम सुभगो रोषाद्वा मे

रोषाद्वाऽविनयान्ममालि सुभगो दुर्दैवतो मेऽथवा
नायातः किमिवेति तर्कविकलं चेतः स्वयं ताम्यति ॥३॥
(इति निःश्वसिति)

**कर्णाटकी**—(स्वगतम्) अहो उन्मत्तेवासंबद्धप्रलापिनीयं **मया कथमाश्वासनीया**। (प्रकाशम्) अयि भीरु

त्वदर्थमेवं प्रतिपद्य साहसं
प्रत्यर्थिमध्ये विचरन् सुगुप्तः।
प्रजागरैः किं कृशतामुपेत-
स्त्वया न दृष्टः सखि सार्वभौमः ॥४॥

**संयोगिता**—(सनिःश्वासं साशङ्कम्) किं नु खल्वेष स्वप्नप्रत्ययः स्यात्। **अथवा**

मामाश्लिष्य चिरं प्रसन्नवदनः प्रेम्णा सुधासूक्तिभि-
श्चाराध्याङ्कगतां विहाय किमिति प्रेयान्मनोवल्लभः।
सैषा त्वं स सखीजनः पुनरयं तच्चापि शय्यागृहं
सर्वं प्रागिव सुस्थितं प्रियतमस्त्वेको न दृग्गोचरः ॥५॥

**कर्णाटकी**—सखि किमेवं भ्रान्तासि।

आच्छिद्य मे हस्तगतां स्मितदृशा
ताम्बूलवीटिं सुभगाय दत्त्वा।

**ममाविनयादथवा माम** दुर्दैवतो नायातः किं वेति तर्कैः कल्पनाभिर्विकलं **दुःखितं चेतः स्वयं** ताम्यत्यवसीदति। अत्र विरहोत्कण्ठिता नायिका। तर्काख्यश्च **व्यभिचारिभावः**। शार्दूलविक्रीडितं वृत्तम्।

**मामाश्लिष्येति**। प्रसन्नवदनः प्रेम्णा मां चिरमाश्लिष्य तदङ्कगतां च **सुधासूक्तिभिरमृततुल्यवचोभिराराध्याथ** मनोवल्लभः प्रेयात् प्रतिष्ठेत किम्। **सैषा त्वं पुनः** सोऽयं **सखीजनस्तदपि** तदेव च शय्यागृहमास्ति। सर्व प्रागिव **पूर्ववत् सुस्थितमस्ति**। एकः प्रियतमस्तु दृग्गोचरो न वर्तते। शार्दूलविक्रीडितं वृत्तम्।

स्वयं विसृष्टं पुनरागमाय तं
स्निग्धे कथं विस्मृतवत्यसि त्वम् ॥ ६ ॥

( नेपथ्येऽश्वखुराघातः )

( आकर्ण्य ) अयि पश्यैनमवितथप्रतिज्ञमुपवनपदं प्रतिपन्नम् ।

**संयोगिता**–( दूरं विलोक्य ) अहो मृषैव मुषितास्मि विस्मृतिमापादयता विरहेण ।

( ततः प्रविशति पृथ्वीराजः )

**पृथ्वीराजः**–प्रिये क्षमस्व मे विलम्बम् । अस्मत्प्रस्थानव्यवस्थितिव्यवसायिना मया विलङ्घितः खलु संकेतकालः ।

**संयोगिता**–आर्यपुत्र तातापचारशङ्काव्याकुलं मे हृदयं तु तव संनिकर्ष एव धृतिं लभते । यतः

नियतमभियुता दिवा प्रियेण
विविधविलासरताऽपि चक्रवाकी ।
निशि न हि सहते स्वकल्पितं सा
कमलदलान्तरिता तु तद्वियोगम् ॥ ७ ॥

**पृथ्वीराजः**–प्रिये एवमेतद् । यतः

आनन्दमात्रामनुभूय जन्तवो
जीवन्ति साक्षादिति लोकसिद्धम् ।
जने तदानन्दपयोधितुल्ये
कथं वियुक्ते त्वसवो वसेयुः ॥ ८ ॥

---

**नियतमिति** । दिवा नियतं नियमेन प्रियेणाभियुता संयुक्ता विविधविलासरताऽपि चक्रवाकी निशि कमलस्य दलं पत्रं तेनान्तरिता वियुक्ता सा स्वकल्पितं तद्वियोगं प्रियवियोगं न हि सहते । पुष्पिताग्रावृत्तम् ।

तत्प्रस्थानप्रवणा भवतु मे प्रियतमा ।

**संयोगिता**–अनुगृहीताऽहमार्यपुत्रस्य मन्मनोरथानुरूपाध्यवसायेन ।

**कर्णाटकी**--अधीश्वर भवतु तवेयं वाराङ्गनाछद्मना परिचरन्ती परिचारिकाऽपि पूर्ववत् त्वदनुग्रहभाजनम् ।

**पृथ्वीराजः**–( सविस्मयम् ) अहो छद्मशब्देन तु जनयसि मे कुतूहलम् ।

**कर्णाटकी**–तत्तावच्छृणोत्वधीश्वरः । कर्णाटराजकुलप्रसूता खल्वहमुपश्रुत्य संगीताचार्येभ्यस्त्वद्गुणातिरेकं त्वयि बद्धानुरागा साक्षादुत्कृष्टकुलयोगं दुर्लभं मन्वाना छद्मरूपधरा

मधुकरी मधुकोशविनिर्गता
परिपतेत्सुमनोरसिका यथा ।
अभिसरन्त्यतिदूरमहं तथा
प्रणयभाजनतां प्रिय ते गता ॥ ९ ॥

**पृथ्वीराजः**–अहो आश्चर्यम् ।

---

**तत्प्रस्थानप्रवणेति** । अत्र निर्वहणसन्ध्यारम्भः । तदुक्तं दर्पणे–‘ बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत ॥ ’ – इति ।

**अहो छद्मशब्देनेति** । अत्र पृथ्वीराजस्य विस्मयः स्थायिभावो रहस्यभेद उद्दीपनं कर्णाटक्या वचनमालम्बनमेवमत्राद्भुतो रसः । तदुक्तं दर्पणे–‘ कुर्यान्निर्वहणेऽद्भुतम् ’ – इति ।

**मधुकरीति** । हे प्रिय मधुकोशविनिर्गता सुमनसां पुष्पाणां रसिका मधुकरी भ्रमरी यथा परिपतेत् परितो धावेत्तथ दूरमभिसरन्त्यहं ते तव प्रणयभाजनता गता तव प्रेमपात्रमभवमित्यर्थः । द्रुतविलम्बितं वृत्तम् ।

**कर्णाटकी**—तथा च

आजन्मनो नाथ वपुर्ममेदं
दृढानुरागोन्मथितं मनश्च ।
त्वामाश्रिते ते तव चानुवर्तिनी
पराभिमर्शाद्भवतः सुरक्षिते ॥ १० ॥

**पृथ्वीराजः**—अयि राजपुत्रि किमिदमुच्यते ।

**कर्णाटकी**—तथैव चाधीश्वरस्य मित्रमिति मया तोषितः संगीतप्रयोगमात्रेणामात्यः कयमाषः ।

**पृथ्वीराजः**—(सनिःश्वासम्) अहो धिङ् मेऽविमृश्यकारित्वम् ।

**कर्णाटकी**—केवलं दैवाधीने जगत्तन्त्रे नार्हत्येवमात्मानमाधिक्षेप्तुमधीश्वरः । ततः परमिहागत्य तवैव हितं समाचरन्त्या मया रक्षितेयं मे प्रियसखी—इति ।

**पृथ्वीराजः**—राजपुत्रि कथं प्रागेव नाविष्कृतं त्वयेदं निजाभिजनरहस्यम् ।

**संयोगिता**—आयि मत्तोऽपि गोपायितम् ।

**कर्णाटकी**—ननु समय एव रहस्यभेदोऽर्थाय कल्पते । अन्यथा त्वनर्थायैव ।

**पृथ्वीराजः**—राजपुत्रि अतः परं त्वमेव प्रपत्स्यसे मेऽन्तःपुराधिकारम् । तदद्यैव कवीश्वरेण सार्धं प्रयाहि सुगुप्तेन पथा दिल्लीनगरम् ।

**कर्णाटकी**—आमन्त्र्याधीश्वरं प्रियसखीं च तथा करिष्ये ।

---

**कयमाष इति** । अत्रेदमनुसन्धेयम्—' एकदा मृगयाविहारार्थं गते पृथ्वीराजे कामपरवशः कयमाषः कर्णाटक्या भवनं जगाम । तस्यामेव रजन्यां निभृतं दिल्लीनगरमुपेत्य इच्छिनीकुमार्या मन्दिरं प्रविष्टेन पृथ्वीराजेन कर्णाटकीभवने कोऽयं महोत्सव इत्यनुयुक्तया तया सर्वं वृत्तजातं निवेदितम् । तदाकर्ण्यैव कुपितेन पृथ्वीराजेनासौ बाणेन निहतः—' इति ।

**पृथ्वीराजः**—प्रिये प्रत्यासन्ना प्रयाणवेला । तदनुज्ञापय ते सखीजनम् ।

**संयोगिता**—प्रथमं तावदामन्त्रये ममोपवनसहायान् ।

( इति अन्तर्गृहस्थसखीजनानुगताः सर्वे सोपानमार्गमवरोहन्ति )

( प्रासादाङ्गनमुपेत्य ) अये

रम्या मे वनवासबन्धुतरवो नानालतालिङ्गिताः
स्निग्धे मे शुकसारिके च दयितालापे नितान्तं रते ।
वीणे मे मधुरस्वरानुरणनानन्दोर्मिमालावहे
यास्यन्तीं पतिमन्दिरं निजसखीं सर्वेऽनुजानन्तु माम्
॥ ११ ॥

अयि मालिनि त्वयि न्यासीकृतेष्वेतेषु सर्वथाऽवहिता भव ।

**मालिनी**—यदाज्ञापयति भर्तृदारिका ।

**चातुरिका**—सखि पश्य । एते खलु

विकीर्यमाणैः कुसुमैर्महीरुहाः
प्रियानुलापैः शुकसारिके पुनः ।

---

**रम्या इति** । नानाभिर्लताभिरालिङ्गिताः परिवृता रम्या मे वनवासस्य बन्धवश्च ते तरवश्च तत्संबुद्धौ, दयितस्य पृथ्वीराजस्यालापे मिथः संलापे नितान्तमतिमात्रं रते निरते मे स्निग्धे शुकसारिके, मधुराश्च ते स्वराश्च तेषामनुरणनेन य आनन्दस्तस्योर्मीणां तरङ्गाणां मालामावहतीति तत्संबुद्धौ मे वीणे, पतिमन्दिरं यास्यन्तीं मां सर्वेऽनुजानन्तु । शार्दूलविक्रीडितं वृत्तम् ।

**विकीर्यमाणैरिति** । हे मदिराक्षि मदिरेवाक्षिणी यस्याः सा तत्संबुद्धौ महीरुहा वृक्षा विकीर्यमाणैः कुसुमैः, पुनश्च शुकसारिके प्रियाश्च तेऽनुलापास्तैः, वीणा च स्वयं स्वरमूर्च्छनादिभिः, 'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्च्छनेत्युच्यते ग्रामस्था एताः सप्त सप्त च ॥' इति मूर्च्छनालक्षणम् । आदिशब्देन तानादीनां ग्रहणं ते तव मङ्गलं प्रतन्वते । वंशस्थवृत्तम् ।

स्वयं च वीणा स्वरमूर्च्छनादिभिः
प्रतन्वते ते मदिराक्षि मङ्गलम् ॥ १२ ॥

( तत आरोहत्यश्वं पृथ्वीराजः )

**कर्णाटकी**—अयि प्रतीक्षते त्वामश्वारूढोऽधीश्वरः ।

**संयोगिता**—अनुजानातु मां गमनाय प्रियः सखीजनः ।

**सख्यः**—का वयमनुज्ञातुम् । परं चास्त्येतदस्मदभ्यर्थनीयं यद्

अतुलरूपगुणान्वितविक्रमं
पतिमवाप्य मनोज्ञमधीश्वरम् ।
ललितनर्मरताऽपि निजं क्वचित्
स्मर वियोगविपन्नसखीजनम् ॥ १३ ॥

**संयोगिता**—अचिरेणैव यमुनाविहारभागिन्यो भविष्यन्ति मे प्रियवयस्याः ।

( इति पृथ्वीराजाङ्कमारोहति )

**कर्णाटकी** -अधीश्वर पश्य

प्रियसखीविरहव्यसनार्दितो-
प्यभिमतार्थसमागमनन्दितः ।
विधृतबाष्पसमाकुललोचनोऽ
पि मुदिताननं एष सखीजनः ॥ १४ ॥

---

**प्रियसखीति** । प्रियसख्या विरह एव व्यसनं तेनार्दितो दुःखितोऽप्यभिमतस्यार्थस्य पृथ्वीराजस्य समागमेन नन्दितः, विधृतानि बाष्पाण्यश्रूणि ययोस्ते च समाकुले च लोचने यस्य तादृशोऽपि मुदितं प्रसन्नमाननं यस्य स एष सखीजनो वर्तत इत्यर्थः । अत्र हर्षविषादयोर्युगपदाविर्भावाद्भावसन्धिः । तदुक्तं दर्पणे—'भावस्य शान्तावुदये संधिमिश्रितयोः क्रमात् । भावस्य शान्तिरुदयः संधिः शबलता मता ॥' इति । द्रुतविलम्बितं वृत्तम् ।

**पृथ्वीराजः**—अयि राजपुत्रि समेतु सखीजना मम राजधान्यां विवाहकौतुकावसरे ।

( इति प्रतिष्ठते )

**कर्णाटकी**—यथा दिशत्यधीश्वरः

**सख्यः**—उभयोर्मङ्गलमाशास्महे । ( इति पुष्पाणि विकिरन्ति )

**कर्णाटकी**—पश्यतु सखीजनः ।

प्रजवतुरगकल्पितासनोऽयं
रिपुहितहेतिकिणाङ्किताङ्कलीनाम् ।
वरतनुमुपगुह्य तां नवोढां
धृतगिरिजाङ्गभवाश्रियं दधाति ॥ १५ ॥

अहो निमेषमात्रेण दृष्टिपथमतिक्रान्तस्तुरंगमः । तदेत साधयामस्तावत् ।

(इति निष्क्रान्ताः सर्वाः)

इति समाप्तोऽयं संयोगिताहरणनामा षष्ठोऽङ्कः ।

**प्रजवेति** । प्रजवश्चासौ तुरगाऽश्वस्तस्मिन् कल्पितमासनं येन सोऽय रिपुभिर्हिताः प्रहिता या हेतयोऽस्त्राणि तासां किणैरङ्कितो योऽङ्कस्तस्मिन् लीना तां नवोढां नवपरिणयां वरतनुं संयोगितामुपगुह्याश्लिष्य धृतं गिरिजायाः पार्वत्या अङ्गं येन स चासौ भवः शिवश्च तस्य श्रियं शोभां दधाति । अत्र निदर्शनालङ्कारः । पुष्पिताग्रावृत्तम् ।

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्योतन्यां संयोगिताहरणनामा षष्ठोऽङ्कः समाप्तः ॥



अथ

# सप्तमोऽङ्कः

( ततः प्रविशति रामगुरुपुरोहितश्चन्दश्च )

रामगुरुपुरोहितः—कवीश्वर स्थाने स्थानेऽवस्थापितानस्मत्सैनिकनिवहान्निर्भिद्यात्र संप्राप्त एष उन्मत्तः कनोजाधिपः कथमपि सान्त्वयितव्यः ।

चन्दः—संकल्पमात्राधीना हि सतामभिमतार्थसिद्धयः । तद्भगवतः कृपया जात एवासौ सर्वथाऽनुकूलः ।

रामगुरुपुरोहितः—( साश्चर्यम् ) कथमिव ।

चन्दः—भगवन् प्रभूतबलक्षयेन तमापन्ननिर्वेदमुपश्रुत्योपयातोऽद्य प्रभाते भगवतीमाराध्य तस्य शिबिरारामम् । तत्र च स्वयमेव सोऽभिनन्द्य ममानुनयामन्त्रणं स्वसुतोद्वाहप्रवणतामात्मन आवेदयत् ।

रामगुरुपुरोहितः—अहो प्रभवति सर्वत्रैव वाग्विभवो देवतानुग्रहशालिनां कवीश्वराणाम् । अप्यस्ति विदितमेतत्सार्वभौमस्य ।

चन्दः—भगवन् एषोऽहमुपसर्पामि श्रावयितुमिमं मङ्गलोदन्तं सार्वभौमम् ।

रामगुरुपुरोहितः—यावदहमप्यग्निकार्यं निर्वर्तयितुमाग्निशरणमुपाश्रये ।

( इति निष्क्रान्तौ )

इति विष्कम्भकः ।

---

**स्वसुतोद्वाहेति** । अत्र निर्णयाख्यं संध्यङ्गम् । 'निर्णयः पुनरनुभूतार्थकथनम्'—इत्युक्तेः ।

**श्रावयितुमिति** । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ'—इति सूत्रेण सार्वभौममित्यत्र द्वितीया ।

( ततः प्रविशत्यन्तर्वेश्मन्यत्रास्थितः पृथ्वीराजश्चन्दश्च )

**पृथ्वीराजः**—मित्र परितो निवेशिताशेषस्कन्धावारः कनोजाधिप उपरुध्यास्मानवतिष्ठते । तदत्र साम्नैवोपपन्नं प्रतिविधानम् ।

**चन्दः**—सार्वभौम दिष्ट्याऽभ्युदितस्ते मनोरथः ।

**पृथ्वीराजः**—( साश्चर्यम् ) अहो किमुच्यते ।

**चन्दः**—निशामयतु सार्वभौमः । मयाऽनुनीतः कनोजेश्वरः स्वसुताया अनुरागातिरेकेण वीतामर्षः संवृत्तः ।

**पृथ्वीराजः**—असम्भाव्यस्याप्यर्थस्यापादयिता प्रभवति सर्वत्रापि कविजनप्रभावः ।

**चन्दः**—सार्वभौम यत्सत्यम्

कार्यं त्वसंभाव्यमपि प्रकर्तुं
　　भर्तुः प्रभावात्प्रभवन्ति भृत्याः ।
रामस्य दूतत्वमुपेत्य तीर्णो
　　महोदधिर्वन्यवलीमुखेन ॥ १ ॥

**पृथ्वीराजः**—मित्र तथापि त्वद्योगात्सर्वत्रैवानायासेन भवति मे कार्यसिद्धिरिति तु प्रत्यक्षीक्रियते । अथ का वार्ता कनोजाधिपस्य ।

**चन्दः**—स तु स्वयमेवात्रोपागत्य कन्याप्रदानायोत्सहते ।

**पृथ्वीराजः**—( साश्चर्यम् ) अहो भगवतो विधेर्विलसितम् ।

क्व सार्वभौमोच्चपदाभिपत्तिः
　　क्व मे कनोजाधिपविप्रकारः ।

---

**कार्यं त्विति** । भर्तुः प्रभावाद् भृत्यास्त्वसंभाव्यमपि कार्यं प्रकर्तुं प्रभवन्ति समर्था भवन्ति । **वने भवो** वन्यः स चासौ वलीमुखो वानरश्च तेन **रामस्य** दूतत्वमुपेत्य **महोदधिस्तीर्णः** । अत्रार्थान्तरन्यासोऽलङ्कारः । उपजातिवृत्तम् ।

**क्व सार्वभौमेति** । सार्वभौमस्योच्चं यत्पदं तस्याभिपत्तिः संप्राप्तिः क्व । कनोजाधिपस्य **जयचन्द्रस्य** विप्रकारो विरोधः क्व । च तत्तनयाया **अनुरागश्च**

क चोद्वहस्तत्तनयानुरागज-

श्चित्रं बताहोऽस्तिविधेर्विधित्सितम् ॥ २ ॥

( प्रविश्य )

**द्वारपालः**—विजयतां देवः । सार्वभौमं द्रष्टुकामः सुमतिर्द्वारि तिष्ठति ।

**पृथ्वीराजः**—प्रवेशय कनोजाधिपमन्त्रिणम् ।

**द्वारपालः**—यथाज्ञापयति देवः ।

( इति निष्क्रान्तः )

(प्रविश्य)

**सुमतिः**—( सप्रमुदम् ) वर्धतां सम्राड् दिल्लीश्वरो नवविवाहमङ्गलेन ।

**पृथ्वीराजः**—स्वागतं मन्त्रिवर्याय । अप्यनामयं कनोजनरपतेः ।

**सुमतिः**—अथ किम् । इच्छत्यसा तु स्वयमेव सम्राजं सभाजायतुं कन्याप्रदानेन । तदनुजानातु सार्वभौमः ।

**पृथ्वीराजः**—मन्त्रिन् सर्वथा मान्या एवास्माकं श्वशुरचरणाः । तदलङ्कुर्वन्त्वेते सपरिवारा अस्मत्सभामण्डपम् ।

**सुमतिः**—यथादिशति सार्वभौमः ।

( इति निष्क्रान्तः )

( नेपथ्ये )

**वैतालिकः**—विजयतां देवोऽभिनवविवाहमङ्गलेन ।

नवजलधरलीलानन्दनोत्तानपक्षा-

मुपवनलुलिताङ्गीं मानसावासलोलाम् ।

---

उद्वहो विवाहः क । अहो बतेत्याश्चर्ये विधेर्दैवस्य विधातुमिष्टं विधित्सितं चित्रं विचित्रमस्ति । अत्र विषमालङ्कारः । उपजातिवृत्तम् ।

**नवजलधरेति** । नवश्चासौ जलधरो मेघश्च तस्य लीलया यन्नन्दनमानन्दकृतेनोत्तानौ पक्षौ यस्यास्ताम् , उपवने लुलितं म्लानमङ्गं शरीरं यस्यास्ताम् ,

कमलदलनिलीनां राजहंसीमवाप्य
प्रमुदितवदनस्त्वं राजसे राजहंसः ॥ ३ ॥

पृथ्वीराजः—(आकर्ण्य) सत्यमिदानीमेव मया समुत्तीर्णश्चिन्तापारावारः ।

चन्दः—जातः खलु सभाप्रवेशसमयः । तदाज्ञापयतु गमनाय सार्वभौमः ।

पृथ्वीराजः—साधयतु कविवरः । अहमपि तावद्देव्या साकं यथासमयमुपतिष्ठे ।

चन्दः—तथा ।

(इति निष्क्रान्तः)

पृथ्वीराजः—कः कोऽत्र भोः ।

(प्रविश्य)

दौवारिकः—आज्ञापयतु देवः ।

पृथ्वीराजः—अन्तःपुरमार्गमादेशय ।

दौवारिकः—इत इतो देवः ।

(उभौ परिक्रामतः)

एतदन्तःपुरद्वारं प्रविशतु देवः । (इति निष्क्रान्तः)

(प्रविश्य)

पृथ्वीराजः—(संयोगितां निर्वर्ण्य) अहो अनभ्यस्तप्रवासवेदनास्तिमिता मे प्रियतमा मञ्चावस्थितैव निद्राति ।

---

मानसे य आवासो निवासस्तदर्थं लोलां चञ्चलां कमलस्य दलं पत्रं तस्मिन् निलीनां राजहंसीमवाप्य प्रमुदितवदनो राजहंसस्त्वं राजसे शोभसे । अत्र रूपकालङ्कारः । मालिनीवृत्तम् ।

दीर्घायासस्फुरितहृदया स्रंसमानाङ्गबन्धा
विस्रब्धं मे स्वपिति दयिता म्लानपद्मानेनयम्।
निर्वर्ण्यैनां दिनकरकरैराविलां चन्द्रलेखां
विन्देतेद् कथमिव धृतिं बोधितुं मानसं मे ॥ ४ ॥

तथापि सकलसंतापप्रशमनं तत्पितुः संदेशं श्रावयितुं तावत्सौम्येनोपचारेण तां प्रबोधयामि । अहो ममोपागमापहृतनिद्रा सा तु स्वयमेवोत्थिता ।

**संयोगिता**–( ससम्भ्रमम् ) आर्यपुत्र एतावता कालेनैव मे सुखं प्रवृत्ता निद्रा ।

**पृथ्वीराजः**–प्रिये समाहिता भव ।

त्वं मर्षिताऽमर्षणतातपादैः
सुखं स्वपीस्तत्र न विस्मयो मे ।
सख्यू रिपोर्वाऽपि मनोगतं यतः
स्वयं स्फुरत्येव निजान्तरात्मनि ॥ ५ ॥

**संयोगिता**–( साश्चर्यम् ) अप्यनुकूलास्तातचरणाः ।

**पृथ्वीराजः**–न केवलमनुकूला अपि तु स्वयमेवास्मद्विवाहोत्सवायात्कण्ठताः

**दीर्घायासेति** । दीर्घश्चासावायासोऽध्वखेदश्च तेन स्फुरितं वेपमानं हृदयं यस्याः सा स्रंसमानोऽङ्गबन्धो यस्याः सा म्लानं यत्पद्मं तद्वदाननं यस्याः सेयं मे दयिता विस्रब्धं निःशङ्कं स्वपिति । दिनकरस्य सूर्यस्य करैः किरणैराविलामेनां चन्द्रलेखां निर्वर्ण्येदं मे मम मानसं तां बोधितुं-' बुधिर्बोधने ' इत्यस्य तुमुनन्तं रूपम् – कथमिव धृतिं विन्देत । अत्र श्रमाख्यो व्यभिचारिभावः – ' खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः – ' इत्युक्तत्वात् । मन्दाक्रान्तावृत्तम् ।

**सौम्येनोपचारेणेति** । अत्र वात्स्यायनः – ' कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः । ...........तस्मात्साम्नैवोपचरेत् । ' इति ।

**संयोगिता**–( ससंमोदम् ) आर्यपुत्र संप्रति परां निर्वृतिमधिरोहति मे हृदयम् ।

**पृथ्वीराजः**–प्रिये प्रत्यासन्नः सभाप्रवेशसमयः ।

**संयोगिता**–सज्जास्म्यहम् ।

**पृथ्वीराजः**–कः कोऽत्र भोः ।

( प्रविश्य )

**दौवारिकः**–विजयतां देवः । इत इतो भर्ता भट्टिनी च ।

( सर्वे परिक्रामन्ति )

एतत्सभागृहद्वारं प्रविशतु भर्ता भट्टिनी च ।

( इति निष्क्रान्तः )

( प्रविश्य )

**पृथ्वीराजः**–स्वागतं सभ्यवरेभ्यः ।

**सभ्याः**–( उत्थाय ) विजयतां सम्राट् । विजयतां सम्राज्ञी ।

( इति सम्राजमनु सर्वे उपविशन्ति )

**वीणिनौ**–( वीणावाद्येन गायतः )

( आसावरीरागेण त्रितालेन गीयते । )

भारतराजकुलेश कृपालो ॥

अनुपममाहिमगुणानामाकर ।

रसमयसरितामयि रत्नाकर ।

कविवरवरदधनेश ॥ भारत० ॥ १ ॥

---

**आसावरीति** । तल्लक्षणमुक्तं लक्ष्यसंगीते– 'भैरवीमेलसंजाता रागिण्यासावरी मता । नटभैरविमेलेऽपि गुणिभिः कैश्चिदीरिता ॥ आरोहे गनिहीनास्यादवरोहे समग्रका । मग्रहा धांशिका पान्ता द्वितीयप्रहरे दिने ॥ ' इति

**भारतेति** । अनुपमो महिमा येषां ते च ते गुणाश्च तेषामाकरस्तत्संबुद्धौ सुरपतेरिन्द्रस्य समितौ सभायां विकासितो विक्रमो यस्य तत्संबुद्धौ । **स्वर्विलासिनीनामप्सरसां** लासिता उल्लासिता विभ्रमा येन तत्संबुद्धौ ।

सुरपतिसमितिविकासितविक्रम ।
स्वविलासिनीलासितविभ्रम ।
अभयवरदकमलेश । भारत० ॥ २ ॥
निजजनपदपरिपालनदीक्षित ।
अशरणशरणमितीव सुवीक्षित ।
जीव चिरं भुवनेश । भारत० ॥ ३ ॥

रामगुरुपुरोहितः—पूर्वं तावदभिनन्द्यते परमोत्कर्षसंपत्त्या सार्वभौमः । यतः

कन्यां प्रदाय मुदितोऽद्य कनोजराजो
मित्रत्वमेति परिहृत्य नि विरोधम् ।
एकातपत्रमवनेरतुलं प्रभुत्वं
सम्राट् चिरार्थितमहो त्वमथाभिपन्नः ॥ ६ ॥

पृथ्वीराजः—(सप्रश्रयम्) भगवन्, 'तस्य राजा मित्रं भवति द्विषन्तमपबाधते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः'—इति श्रुतिसिद्धेनैव भगवतो महिम्ना ममाप्तकामत्वम् ।

कन्हः—अथ संभावयतु सार्वभौमोऽस्मन्मान्यं कनोजाधीश्वरम् ।

पृथ्वीराजः—सभ्याः, अद्य खलु कनोजाधीश्वरस्य शाश्वतिकीं मैत्रीमभिलषन्

स्वागतेन गुरुतामुपयातं
तं नरेन्द्रमभिनन्द्य मुदाऽहम् ।

---

**श्रुतिसिद्धेनेति** । ऐतरेयब्राह्मणप्रतिपादितेनेति ।

**स्वागतेनेति** । गुरुतां श्वशुरपदमुपयातं प्राप्तमत एव मान्यं तं नरेन्द्र जयचन्दमहं मुदा स्वागतेनाभिनन्द्य मम जनपदे छत्रं च चामरयुगं चान्तः सीमा यस्या सा चासौ विभूतिरैश्वर्यं च तया याजये । स्वागतावृत्तम् ।

योजये जनपदे मम मान्यं

छत्रचामरयुगान्तविभूत्या ॥ ७ ॥

तदर्पयतु पितृव्यचरणा ममादेशनिदर्शकं ताम्रपट्टम् ।

कन्हः—तथा ।

( इति कनोजाधिपमन्त्रिणेऽर्पयति )

सुमतिः—सार्वभौम, अस्मदधीश्वरोऽपि

नयप्रयोगैर्नितरामधृष्यः

सुताभियोगस्य पुनः प्रकर्षात् ।

स्वयं तवैवं वशतामुपेत

आशंसते ते स्थिरमद्य सौहृदम् ॥ ८ ॥

कन्हः—यत्प्रयोगालम्बनमात्रेणानुभूयत इयं मङ्गलपरंपरा तमनुगृह्णातु सार्वभौमो मन्त्राधिकारनियोजनेन ।

पृथ्वीराजः—बुद्धिप्रकर्षाच्छौर्यातिरकाच्चार्हत्येव मन्त्रिपदं कवीश्वरः । तदद्य खल्वहं

धीवैभवप्रथितचारुयशःप्रकाश-

मेकान्तभक्तिपरमं कविराजमित्रम् ।

प्रेम्णाऽभिनन्द्य समदुःखसुखाय तस्मै

मन्त्राधिकारमसमं वितरामि तुष्टः ॥ ९ ॥

---

**नयप्रयोगैरिति** । नयस्य दण्डनीत्याः प्रयोगैः सामादिभिर्नितरामत्यन्तमधृष्यः सुतायाः संयोगिताया अभियोगस्यानुरागस्य प्रकर्षादेवं स्वयं तव वशतामुपेतस्तेऽद्य स्थिरं सौहृदमाशंसते । उपजातिवृत्तम् ।

**धीवैभवेति** । धियो बुद्धेर्वैभवेन प्रथितः प्रसिद्धश्चारुः शोभनो यशःप्रकाशो यस्य तमेकान्तभक्तिः परमा यस्य तमसमं प्रधानं मन्त्राधिकारं मन्त्रिपदम् । वसन्ततिलकावृत्तम् ।

तदर्हयतु मन्त्रिपदमण्डनै. कवीश्वरम् ।

कन्हः—तथा ।

( इति यथादिष्टं कुरुते )

चन्दः—( ससंमोदम् ) सार्वभौम महत्यस्मिन्ननुग्रहेऽप्यस्ति मेऽभ्यर्थनीयम् । यन्मम

समुपचारपरंपरयाकुलं
नयनियन्त्रितवाक्प्रसरं पुनः ।
तदधिगम्य तु मन्त्रिपदं वरं
भवतु मा प्रियमित्रपदच्युतिः ॥ १० ॥

कन्हः—अलोकसामान्यराजभक्तिविशिष्टं संजयरायस्य विश्रुतवंशं प्रतिष्ठापयतु सेनाधिपत्ये सार्वभौमः ।

पृथ्वीराजः—प्राणव्ययेनाऽपि भर्तुर्हितं संपादयता संजयरायेण लङ्कडीरायेण च लीलयैव संसाधितः पुण्यलोकजयः । अतः

देहं निजं समरयज्ञबलिं प्रकल्प्य
यद्वंशजैः प्रकटिता मयि राजभक्तिः ।
तस्यान्वये प्रबलवीरजनाकरेऽहं
संस्थापयाम्यखिलराष्ट्रबलाधिकारम् ॥ ११ ॥

तद्वितरन्तु राजशासनं लङ्कडीरायात्मजे पितृव्यचरणाः ।

कन्हः—तथा ।

(इति यथादिष्टं करोति)

पृथ्वीराजः—अथार्हयतु यथाविक्रमं विक्रमशालिनः सर्वानपि वीरभटान् कोशाध्यक्षः ।

**समुपचारेति** । समुपचाराणां परंपरया आकुलं व्याप्तं नयेन **राजनीत्या** नियन्त्रितो वाक्प्रसरो वाग्व्यापारो यस्मिंस्तद्वरं श्रेष्ठं मन्त्रिपदं **त्वधिगम्य** प्रियं च तन्मित्रं च तस्य पदात् च्युतिर्मा भवतु । द्रुतविलम्बितं **वृत्तम्** ।

कोशाध्यक्षः—यथाज्ञापयति देवः

( इति निष्क्रान्तः )

कन्हः कर्णाटराजपुत्रि, सन्निष्ठया निषेवितः सार्वभौमस्त्वां नियोजयत्यन्तःपुराधिकारे ।

**कर्णाटकी**—महानेषोऽनुग्रहो लोकनाथस्य । अद्य खलु

आजन्मविश्रम्भपरस्य भर्तुः
प्रियं हितं चैव समाचरन्त्या ।
दिष्टया पुनर्भृत्यजनैः सदार्थितः
स्थिरः प्रसादः समुपार्जितो मया ॥ १२ ॥

**जयचन्द्रः**—अये भारतैकवीर

मिथोऽनुरागाभ्युदयप्रहर्षितः
स्वयंवरां मे तनयां समर्प्य ।
सम्राट् स्वयं विक्रमशालिने ते
कृतार्थतामद्य गतोऽस्मि सान्वय. ॥ १३ ॥

**पृथ्वीराजः**—अहो बतायं मे युगपदुपनतो मङ्गलसमुच्चयः ।

सम्राट्पदं प्रचुरकोशबलेशमैत्री
साचिव्यमप्यसितभक्तिनयप्रदीप्तम् ।
एकान्तरागरसिकप्रियया च योगो
लोकानुरञ्जनमथ स्वजनस्य तोषः ॥ १४ ॥

**संयोगिता**—दिष्टयाऽहमपि

तेजस्विने राजकुलेश्वराय
तुष्टेन पित्रा स्वयमेव दत्ता ।

**सम्राट्पदमिति** । अत्र भाषणाख्यं संध्यङ्गं—' मानाद्याप्तिश्च भाषणम् '—इत्युक्तेः ।

**तेजस्विन इति** । अत्रानन्दाख्यं संध्यङ्गं—' आनन्दो वाञ्छितागमः '—इत्युक्तेः ।

कान्तं मनस्कान्तमवाप्यनून-

मेकान्तसौभाग्यफला भवामि ॥ १५ ॥

( प्रविश्य )

**प्रतिहारी**—एष तेजोमण्डलमाण्डिताननः कोऽपि तपोनिधिर्द्वारि तिष्ठति ।

**पृथ्वीराजः**—प्रवेशयैनं भगवन्तं महानुभावम् ।

**प्रतिहारी**—यद्देव आज्ञापयति ।

(इति निष्क्रान्तः)

( ततः प्रविशति सिद्धतापसः )

**पृथ्वीराजः**—( सर्वैः सहोत्थाय ) एष पृथ्वीराजोऽभिवाद्य भगवन्तं महानुभावं स्वागतेन पुनरभिनन्दति ।

( इति प्रणमति )

**सिद्धतापसः**—समृध्यतां सार्वभौमो महेन्द्रश्रिया ।

( वीणावादनं प्रवर्तते )

**पृथ्वीराजः**-( सप्रश्रयम् ) भगवन् प्रतिगृहीताशीः ।

**सिद्धतापसः**—सार्वभौम, क्षात्रधर्मानुवर्तिनस्ते सकलमप्यभीष्टं मया तपःप्रभावात् संपादितम् । अथ किं ते भूय उपकरवाणि ।

**पृथ्वीराजः**—भगवदनुग्रहेण न मे किमपि भद्रमवशिष्यते । तथापीदमस्तु भरतवाक्यम् ।

मिथो रागासक्तान्प्रणयमयलीलाविलसितै-

र्द्रवत्वं संप्राप्तान्नियतमनुरूपान्युवगणान् ।

**भरतवाक्यमिति** । भरतवाक्यं नटवाक्यम् । अत्र प्रशस्त्याख्यं सन्ध्यङ्गं– 'प्रशस्तिः शुभशंसनम् – ' इत्युक्तेः ।

**मिथ इति** । मिथः परस्परं रागेण स्नेहेनासक्तान् प्रणयमयाः स्नेहप्रचुराश्च ता लीलाश्च तासां विलसितैर्द्रवत्वं संप्राप्तान् द्रवीभूतान् नियतं नियमेनानुरूपान् तुल्यान् युवानश्च युवत्यश्च तेषां गणान् भारतभुवि स्नेहे स्थिरा

स्थिरं कृत्वा स्नेहं निरवधिसुखे भारतभुवि

नियुञ्जानो रत्या सह कुसुमधन्वा विजयताम् ॥ ११ ॥

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽय विवाहोत्सवनामा सप्तमोऽङ्कः ।

**समाप्तमिदं संयोगितास्वयंवरं नाम नाटकम् ।**

---

कृत्वा निरवधिसुखे नियुञ्जानो रत्या सह कुसुमधन्वा मदनो विजयताम् । शार्दूलविक्रीडितं वृत्तम् ।

सर्वेषां नाटकाङ्गानां दिङ्मात्रमिह दर्शितम् ।
विशेषः शास्त्रतस्तूह्यः काव्यपीयूषलालसैः ॥

इति श्रीसंयोगितास्वयंवरटीकायां सर्वाङ्गविद्योतन्यां विवाहोत्सवनामा सप्तमोऽङ्कः समाप्तः ।



# परिशिष्टम्

## गेयपद्यानां स्वरसंयोगः ।

१. (पृ० ४)–

वसन्तरागेण त्रितालेन गीयते ।

### [1]स्थायी

वि ल स ति । ल लि ता ऽ । उ प व न । व नि ता ऽ ।

सां नि ध प । मं ग मं ग । रे सा म ग । मं ध रें सां ।

ध्रुवपदम् ॥

### अन्तरा

न व प ऽ । ल वि ता ऽ । अ नि ल त । र लि ता ऽ ।

मं ध सां – । सां रें सां सां । सां गं मं गं । मं गं रें सा ।

त रु व र । मि लि ता ऽ । सु कु मा ऽ । र ल ता ऽ ।

रें नि ध प । मं ग मं ग । नि मं ग – । मं ग रे सा ।

वि ल स ति० ॥

सां नि ध प० ॥

१. तदुक्तं संगीतरत्नाकरे–

उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृतः ।
ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ॥
ध्रुवाभोगान्तरे जातो धातुरन्योऽन्तराभिधः ॥ इति ।
अत्रोद्ग्राहो नाम स्थायिस्वरविशिष्टः स्वरसमूहो लोके स्थायीति प्रसिद्धः ।

२. (पृ० २२)

भूपालिरागेण त्रितालेन गीयते ।

## स्थायी

पा ऽ य य । त व र सि । कां ऽ र स । पा ऽ नं ऽ ।

सां — ध प । ग प ध प । ग रे सा रे । प — ग — ।

ध्रुवपदम् ॥

## अन्तरा

मो ऽ द य । स द यं ऽ । द यि ता ऽ । हृ द यं ऽ ।

ग — प ध । सां सां सां सां । ध सां रें — । सां ध प —

द्यो ऽ त य । स हृ द य । ल ता ऽ नं ऽ ।

गं गं रें सां । रें सां धं पं । ग ग — प । ग रे सा — ।

पा ऽ य य ० ॥

सां — ध प ० ॥

३. (पृ० २५)—

वसन्तरागेण त्रितालेन गीयते ।

## स्थायी

वि त र ति । न ति म यि । र ति र म । ण ऽ ऽ ऽ

सां नि ध प । मं ग मं ग । मं ध मं ध । रें — सां — ।

यु व ति ज । न ऽ स्ते ऽ । र ति र म । ण ऽ ऽ ऽ ।

नि मं — ग । म ग रे सा । सा ग मं ग । रे — सा —

ध्रुवपदम् ॥

### अन्तरा

न व सु म । सा ऽ य क । व स ऽ न्त । ना य क ।

म ध म ध । सां – सां – । सां सां सां सां नि सां रें सां ।

अ लि कु ल । गा ऽ य क । र ति र म । ण ऽ ऽ ऽ ।

सां – गं – । मं गं रें सां । मं ध मं ध । रें – सां – ।

वि त र ति० ॥

सां नि ध प० ॥

४. ( पृ० २६ )–

बाहाररागेण त्रितालेन गीयते ।

### स्थायी

पा ऽ हि म । नो ऽ भ व । म द न ऽ । ऽ ऽ ऽ ऽ ।

म प ग म । ध – नि सां । नि नि सां ऽ । सां – नि प ।

अ र मि ह । स द य मु । पे ऽ हि स । मे ऽ हि ऽ ।

म प नि प । म प ग म । ग म रे सा । रे रे सा – ।

ध्रुवपदम् ॥

### अन्तरा

अ लि कु ल । सं ऽ कु ल । ब कु ल सु । वा ऽ सि त ।

म प प प । म प ग म । ध – ध – । नि सां रें सां ।

वा ऽ त वि । का ऽ सि त । न व र स । ला ऽ सि त ।

नि – सां – । गं मं रें सां । नि नि सां सां । नि सां रें सं नि ध

यु व ज न । मा ऽ न स । स द न ऽ । ऽ ऽ ऽ ऽ ।

नि प म प । म प ग म । ध नि सां – । सां – नि प

पा ऽ हि म० ॥

म प ग म ० ॥

५. (पृ० ५१)—

केदाररागेण त्रितालेन गीयते ।

**स्थायी**

मा ऽ ध व । य मु ना ऽ । ती ऽ र वि । हा ऽ री ऽ ।

म प ध प । म रे सा – । सा रे सा सा । मं – प – ।

ध्रुवदम् ॥

**अन्तरा**

दु रा ऽ । धा ऽ ध र । म धु म धु । म धु क र ।

प – प – । सां – सां – । सां ध सां रें । सां ध प प ।

न ट व र । गि रि व र । धा ऽ ऽ ऽ । री ऽ ऽ ऽ ।

गं मं रे सा । सां सां ध प । ध नि सां रे । सां नि ध प ।

मा ऽ ध व० ॥

मं प ध प ० ॥

६. (पृ० ६६)—

गौण्डमल्लाररागेण त्रिताल्रेन गीयते ।

**स्थायी**

क नु म म । वि ह र सि । मा ऽ न स । हं ऽ स ऽ ।

रे ग रे म । ग रे सा सा । रे ग रे ग । म प म ग ।

ध्रुवपदम् ॥

**अन्तरा**

घ न इ व । स त तं ऽ । व ऽ र्ष ति । न य नं ऽ ।

रे ग रे प । प — प — । म प ध सां । ध प म ग ।

स्फु ट य ति । त डि दि व । र ति रि ह । हृ द यं ऽ ।

रे ग रे म । ग रे सा सा । रे ग रे ग । म प म ग ।

क नु म म० ॥

रे ग रे म० ॥

७. (पृ० ९४)—

आसावरी रागेण त्रिताल्रेन गीयते ।

**स्थायी**

भा ऽ र त । रा ऽ ज कु । ले ऽ श कृ । पा ऽ लो ऽ ।

रे — सा — । रे — म प । ध - प प । म प ध प ग — ।

ध्रुवपदम् ॥

## अन्तरा

अं नु प म । म हि म गु । णा ऽ ना ऽ । मा ऽ क र ।

म म प प । ध ध प ध । सां – सां – । सां – – – ।

र स म य । स रि ता ऽ । म यि र – । त्ना ऽ क र ।

सां सां गं गं । रें रें सां सां । निं ध सां रें । सां नि ध प ।

क वि व र । व र द ध । ने ऽ श ऽ ऽ ऽ ऽ ।

म म प प । म प ध सां । सां नि ध प । म ग रे सा ।

भा ऽ र त० ॥

रे – सा – ऽ ॥



# SAMYOGITÂ SWAYAMVARAM.



## ACT I.



### Prelude.

May the juvenile amorous gestures, of the eyes of Radha, which are freely and incessantly directed like the flashes of lightning towards the beautiful face of Krishna having on it a smile as pure and white as a Kunda flower, and possessing the glossy dark shade of a cloud, which express her inward feeling by loving glances, which are full of indistinct love, and which bear the hue of her tender lower lip, protect you ( I ).

( *After the Benediction.* )

**Sutradhara**–Dear, this much exertion is enough. Come here.

( *Entering* )

**Nati**–Here I am, my lord. Let me know what is to be done next.

**Sutradhara**–To day indeed this learned assembly is to be honored with (the performance of ) a new drama named Samyogita Swayamvara composed by Mulshanker, who is an inhabitant of Natapura ( Nadiad ). So begin some charming song limited by Swara and Tala in the tunes of Vasanta Raga, to please the assembly. For now,

The gentle breeze, fragrant with the particles of sandal wood and cooled by the rays of the moon, embraces the woman in the form of the creeper, which is bent and which has fresh leaves, and makes it dance ( 2 ).

**Nati**–As my lord directs.

The tender creeper, which is like a woman in the garden, which is shaken by the wind, and which is united with the

best tree, looks beautiful in the charming spring, which is honored by women of taste, which is agreeable to tender sports, and which is a friend of Cupid.

**Sutradhara**—( *Hearing the sound of musical instruments* ) My dear, you are blessed. It appears as if the reverberation of the tunes of your song has spread everywhere.

**Nati**—( *With a smile*) My lord, this is the sound of the lute-players, who are singing a song in the Vasanta Raga to amuse the princes that have come to-day to take part in the Rajasuya sacrifice commenced by our king.

**Sutradhara**—Oh, I am well reminded. I have quite forgotten that this great sacrifice was to begin to day. Dear, look, here is our great king Jayachand. Now,

His Majesty, considering his family blessed by honoring the different glorious princes, who are cordially invited and who are pleased with the festival, has taken a vow of the sacrifice, and holds some new consultation with his minister in the inner apartment, being amused by the lute-players. ( 3 ) ( *Exeunt* )

**End of the Prelude.**

( *Then enters Jayachanda with his minister* )

**Jayachanda**—Oh minister, this our city, being over-crowded with the great sages and the princes, who have come to attend the Rajasuya sacrifice, appears to day as prosperous as Amaravati.

**Sumati**—Oh great king, having taken the vow of the sacrifice, Your Majesty,

With your foot-stool, adored by the costly crowns shining on the heads of the princes, that have come from various directions, appears like the great sage Agastya, with his two feet adorned by the summits of the Vindhya mountain ( when he bowed down to the sage ). ( 4 )

**Jayachanda**—Are all the preparations for the sacrifice complete ?

**Sumati**—Yes, my lord. But no news have been received from Pruthviraja as yet.

**Jayachanda**—( *Angrily* ) That wicked king proud of his unlawful possession of the throne of Dehli, deserves punishment.

**Sumati**-My lord, war is the last recourse. So a letter may be sent to persuade him once more.

**Jayachanda**-( *Angrily* ) Then write to him the following order:—

'The Supreme Lord of all the Indian princes orders you to act as a door-keeper in his sacrifice. If you will not attend to this duty, you will be offered as a beast in the sacrifice of war' ( *5* )

**Sumati**-( *Having written* ) I have written it as directed by Your Majesty. Hollo, who waits there ?

( *Entering* )

**Door-keeper**-May Your Excellency command.

**Sumati**-Send this letter to Pruthviraja with a messenger, without delay.

**Door-keeper**-As Your Excellency commands ( *Exit* )

**Jayachand**-Oh, even Samarsinha, the Lord of Mevad has not welcomed our invitation.

**Sumati**-My lord, Samarasinha is a fast friend of Pruthviraja. Hence he too will take the same course.

**Jayachand**-( *Angrily to himself* ) Well, Samarasinha, well. ( *Aloud* ) They are bent upon putting obstacles to the sacrifice begun by us. But the king of Kanoja will not be disheartened by the movements of such mean persons.

**Sumati**-( *Thinking* ) My lord, it is prescribed in the Vedas that he alone can perform the R. sacrifice who has subdued all the kings. So, how can we begin the rites without their presence ?

**Jayachand**–This is not the time to discuss what is prescribed and what is not. They will be represented by their golden images.

( *Entering* )

**Door-keeper**–Victory to my Lord. Here is a messenger from Prithvuraja with a letter.

**Jayachanda**–Bring here that letter without delay.

**Door-keeper**–As my lord commands. ( *Exit* )

**Jayachanda**–( *To himself* ) He has sent a letter, but has not come in person. ( *Aloud* ) I think he is adverse to us in every way.

( *Entering* )

**Door-keeper**–My lord, here is the letter bearing the seal of Pruthviraja

( *Hands over* )

**Jayachanda**–( *Taking the letter* ) I wish to see the Purohita.

**Door-keeper**–As my lord commands. ( *Exit* )

**Jayachanda**–Minister, open and read this.

( *Entering* ).

**Shree**–May the great king be victorious.

( *Sits down* )

**Sumati**–( *Reads* ) Oh, king of Kanoja clever in destroying the principles of Vedic religion, what are you doing ?

Oh foolish king, being led by evil luck, you have begun the Rajasuya sacrifice, which can be performed only by the Supreme Lord. If you will not give up this undertaking you will die like a moth in the fire in the form of my sword. ( 6 )

**Jayachanda**–( *Hearing, angrily* ) Oh fool, why do you boast thus ? What other doomed fellow deserves the sovereignty of India. ( *Thinking* ) Oh, I see. This wretched fellow calls himself the Soverign. Oh minister, this insult is unbearable.

**Shree**-Pacify yourself. You should not be excited while in a vow.

**Jayachanda**-Your Holiness, I am not angry without any cause.

**Shree**-Still,

Oh great king, favoured by the goddess of Victory, you are considered by all the kings as the Supreme Lord. How can the Sun, who illuminates the whole world, be compared to a moth, which burns away in the thin flame of a lamp, although both of them are called Patanga. (7)

**Jayachanda**-Oh, he like Rahu, wants to eclipse me. So he should be extirpated. Who is there ?

( *Entering* )

**Door-Keeper**-May my lord command.

**Jayachanda**-Show me the way to the assembly-hall.

**Door-Keeper**-This way, my lord.

( *All move about* )

This is the door of the assembly-hall. May my Lord enter it with others. ( *Exit* )

( *Entering* )

**Jayachanda**-( *Ascending the throne* ) Welcome to the great tributary princes.

**Tributaries**-( *Standing* ) May Your Majesty be victorious.

( *All sit down* )

**Jayachanda**-( *With pride* ) Oh the best of my tributary princes, the proud king of Dehli does not come over here, considering himself as the Supreme Lord. That wretch should be subdued somehow.

**Hamira**-What doomed person may desire to be a sovereign, when your Majesty shines with the powerful lustre of sovereignty ? Because,

The fiery lustre of your treasure and your army has spread in the army of your enemies like a forest-conflagra-

